# पुराणोत्तमे श्रीमद्भागवते प्रतिबिम्बितं भाषादर्शनम्

प्रो. विन्ध्येश्वरीप्रसाद मिश्रो 'विनयः'

मेघश्यामतनुप्रभां स्थिरतडिद्दीप्तोज्ज्वलां मञ्जुलां

लीलालास्यलसच्छटां मधुपृषत्सद्वर्षहर्षां पराम्।

शुष्यत्प्रीतिधुनीविवर्धनकरीं चिद्वाटिकोज्जीवनीं

चित्ते कामपि भावयेऽमृतमयीं राधामुकुन्दद्वयीम्॥1॥

तडिद्घनमिलच्छविः कुमुदबन्धुगाऽर्कप्रभा

विभाति नु विभावरीदिवससंहिता किं पुरः?

हृदि स्थितमचञ्चलं किमुत तत्त्वमेवाद्वयं

समञ्चति दृशोर्हि मे सपदि कृष्णराधाऽऽत्मना॥2॥

श्रीमद्भागवतं रसामृतनिधिर्विद्यावगाहावधिः

प्रेम्णः कोऽपि विधिर्निषेधरहितः संसाररोगौषधिः।

पुण्यानां प्रणिधिस्तथा प्रतिविधिर्दुर्वासनानामथ

प्राज्ञानामधिकारिणामनुपधिः स्वात्मा परः शेवधिः॥3॥

शुकाननरसस्फूर्तं मूर्त्तं श्रुत्यन्तविग्रहम्।

द्रुतं दीप्तञ्च तन्नौमि श्रीमद्भागवतामृतम्॥4॥

श्रीमद्भागवते भाषाशास्त्रीयं तत्त्वचिन्तनम्।

अनुस्यूतं विशेषेण यत्तत्सङ्क्षिप्यतेऽधुना॥5॥

श्रीमद्भागवतं, पुराणशास्त्रं सदपि रसप्रस्थानापरपर्यायं वेदान्तशास्त्रमप्यस्ति तस्मादस्य

किमप्यनन्यसाधारणं वैशिष्ट्यं बहुशो विस्तरेण न्यरूपपि,[1] सम्प्रति प्रसङ्गानुगुणं किञ्चिदिव प्रदर्शयामो विदुषां मनोमोदाय।

**श्रीमद्भागवतस्य शास्त्रत्वं**—शासनादनुशासनाच्छंसनादिति व्युत्पत्तित्रयमप्यन्वेतीत्यत्र केवलं सङ्केतयितुमेव शक्यते विस्तरपरिजिहीर्षापारवश्यात्। भाषादर्शनमत्र पारमार्थिकं व्यावहारिकञ्चो-भयविधं तत्क्रमश उल्लिख्य विमृश्यते।

**पारमार्थिकं भाषादर्शनम्**—अत्र ब्रह्मनिरूपणप्रसङ्गे श्रुत्युक्तसरण्या ब्रह्मणो द्वैविध्यं, शब्दब्रह्म—परब्रह्मभेदाद्। यथा—

**शाब्दे ब्रह्मणि निष्णातः परस्मिंश्च भवान् खलु।** (श्रीमद्भागवते 2/4/10)

**शाब्दे ब्रह्मणि निष्णातो न निष्णायात्परे यदि।**

**श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः॥** (तत्रैव 11/11/18)

वेदान्तवेद्यमवाङ्मनसगोचरमात्मतत्त्वमेव परं ब्रह्म तच्च शब्दागोचरं, यथोक्तं भागवतकृन्महर्षिणा—

**अतः परं सूक्ष्मतममव्यक्तं निर्विशेषणम्।**

**अनादिमध्यनिधनं नित्यं वाङ्मनसः परम्॥** (2/10/34)

अपि च—

**यतोऽप्राप्य न्यवर्तन्त वाचश्च मनसा सह।**

**अहञ्चान्ये इमे देवास्तस्मै भगवते नमः॥** (3/6/40)

**नमो गिरां विदूराय मनसश्चेतसामपि।** (8/3/10)

**वचसाऽनिरुक्तम्।** (8/5/26)

**नैतन्मनो विशति वागुत चक्षुरात्मा**

**प्राणेन्द्रियाणि च यथानलमर्चिषः स्वाः।**

**शब्दोऽपि बोधकनिषेधतयाऽऽत्ममूल—**

**मर्थोक्तमाह यदृते न निषेधसिद्धिः॥** (11/3/36)

************************************************************************

शब्दब्रह्म च भगवान्वेदो वाङ्मयात्मकमस्य विस्तरश्च–

**शब्दब्रह्मणि दुष्पारे चरन्त उरुविस्तरे।**

**मन्त्रलिङ्गैर्व्यवच्छिन्नं भजन्तो न विदुःपरम्॥** (4/29/45)

आधिदैविकदृष्ट्या भगवतस्तनुरेव वेदा अतो भगवन्मूर्त्तेरपि शब्दब्रह्मत्वमभ्युपगतं भगवता पुराणर्षिणा, यथा–

**तावत्प्रसन्नो भगवान्पुष्कराक्षः कृते युगे।**

**दर्शयामास तं क्षत्तः शाब्दं ब्रह्म दधद्वपुः॥** (3/21/8)

अत्राह 'भावार्थदीपिका'–कारः श्री श्रीधरस्वामी–"शब्दैकवेद्यं यद्ब्रह्म तन्मयं वपुर्दधत्तम्प्रत्यात्मानं दर्शयामास" इति। भगवत्यङ्गाङ्गिभावो लीलात्मक एव न तात्त्विकोऽत एव वेदस्यापि नारायणाङ्गत्वमङ्गीक्रियतेऽस्माभिर्भागवतानुयायिभिः–

**वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुम्।** (6/1/40)

इति स्वयंशास्त्रोक्तदर्शितदिशा। अस्य वेदात्मकस्य शब्दब्रह्मणः सुतरां शास्त्रीयं निरूपणमत्रोपलभ्यते, यथा–

**शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम्।**

**अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत्॥** (11/21/36)

एतदेव विशदयति तत्रभवानाचार्यश्रीधरः–

"शब्दब्रह्मेति। तच्च सूक्ष्मं स्थूलञ्चेति द्विविधम् तत्र सूक्ष्मं तावत्स्वरूपतोऽपि दुर्विज्ञेयमित्याह–

'प्राणेन्द्रियमनोमयम्।' प्रथमं प्राणमयं पराख्यं ततो मनोमयं पश्यन्त्याख्यं तत इन्द्रियमयं मध्यमाख्यं वैखर्याख्यया बृहत्या वाच उत्पत्तिप्रकारं सदृष्टान्तमाह।'

एनामेव भागवतीं पद्धतिमनुव्याकरोति वाक्यपदीयकारो भर्तृहरिः–

**वैखर्य्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।**

**अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्॥** (वाक्यपदीये 1/143)

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।

विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः।। (तत्रैव 1/1)

इति वैय्याकरणशिरोमणिरयं तत्र भवानाचार्य उत्पादविनाशरहितं पूर्वापरीभावशून्यमुपसंहृतक्रमञ्च शब्दमेव जगत उपादानकारणत्वेन मनुते यथा प्राक्प्रपञ्चितं भागवतकारेण। श्रीमद्भागवतशास्त्रं, द्वादशस्कन्धे शब्दब्रह्मात्मकत्वादोङ्कारादेव सर्ववाक्प्रपञ्चमञ्चितमभिधत्ते। ओंकारश्चात्र द्विधा- नादात्मा स्फोटरूपोऽव्यक्तः प्रथमो, व्यक्तरूपस्त्रिमात्रिकश्च द्वितीयस्तद्यथा-

समाहितात्मनो ब्रह्मन्ब्रह्मणः परमेष्ठिनः।

हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते।।

ततोऽभूत्त्रिवृदोङ्कारो योऽव्यक्तप्रभवः स्वराट्।

यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः।।

शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक्।

येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः।।

स्वधाम्नो ब्रह्मणः साक्षाद् वाचकः परमात्मनः।

स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम्।। (12/6/37,39,40,41)

'स्फुटत्यर्थो यस्मादिति' व्युत्पत्त्या स्फोटशब्दोऽत्राव्यक्तोङ्कारस्य ग्राहक इति श्रीधरस्वामिनोऽभिमतिः।[2] अस्मादेव निखिलार्थसार्थस्य प्रादुर्भावोऽयमेव च सर्वाश्रय इति भागवतराद्धान्तमेवानुसरन्ति वैय्याकरणास्तत्त्वदृशेति समञ्जसमाभाति। श्रीमद्भागवते वर्णसमाम्नायस्य विवृतिर्व्याकरणशास्त्रीयामेव सरणीं संवदते, यथाऽयं श्लोकः-

ततोऽक्षरसमाम्नायमसृजद् भगवानजः।

अन्तःस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम्।। (12/6/43)

अपि चैकादशे-

छन्दोमयोऽमृतमयः सहस्त्रपदवीं प्रभुः।

ओङ्काराद् व्यञ्जितस्पर्शस्वरोष्मान्तस्थभूषिताम्।। (11/21/39)

अथ शब्दार्थयोस्सम्बन्धजिज्ञासायामस्मिञ्छास्त्रे प्रत्यायकप्रत्याय्यभावसम्बन्धो व्यावहारिकः,

पारमार्थिकश्च जनकजन्यसम्बन्धः। तत्र प्रथमदृष्ट्या, 'सङ्केतग्रहो जातौ व्यक्तौवेति' प्रश्नो नैय्यायिकमीमांसकवैय्याकरणादिवादिनां शिरसि सततं व्यालम्बमानः शङ्काशिलोच्चय एव; कुतः ? जातौ सङ्केतग्रहाग्रहे तस्यामूर्त्तत्वादेकत्वाच्चाव्यावहारिकत्वकुक्षिनिक्षेपाद् व्यक्तौ तत्स्वीकारे चानन्त्यव्यभिचारदोषद्वयदुर्वारादत एतस्यापि पक्षच्छेदोऽस्माभिर्विधेय इन्द्रानुजभक्तिवर्त्मानुयायिभिः।

श्रीमद्भागवतशास्त्रं केवलं स्वकीयशुद्धाद्वैतसिद्धान्तस्य प्रतिपादकं मन्वाना वाल्लभा अत्र व्यक्तावेव सङ्केतग्रहो भागवतसम्मत इत्यङ्गीचक्रुर्यथाऽऽह 'प्रमाणरत्नाकरे' गोस्वामिश्रीपुरुषोत्तमचरणः–

''**तस्मान्नाकृतिमात्रे सम्बन्धः किन्तु व्यक्तावेव सम्बन्धः। ननु व्यक्तीनामानन्त्यादेकत्र गृहीसम्बन्धस्य घटादिपदैर्घटान्तरबोधानुपपत्तिर्दुर्वारेति विशिष्टे सम्बन्धो वाच्य इति चेन्न, ब्रह्मवादे पदार्थानां सर्वेषां भगवदभिन्नत्वेन नित्यत्वात्कारणत्वेनाभिव्यक्तैरभिव्यक्तिमात्राङ्गीकारादेकस्यैवानेकधा भवनेन आविर्भवनेन तिरोभवनेन चैकस्यैव सर्वत्र सत्त्वादानन्त्येप्यदोषादेकत्रैव गृहीतायां शक्तौ निर्वाहाद् रुद्रव्यूहवदनुगताकारप्रतीतिसिद्धेश्च वैशिष्ट्यगौरवस्य वैय्यर्थ्यात्।**'' इति तन्नचारु, 'सर्वं ब्रह्मेति' पारमार्थिकत्वेऽपि व्यवहारभूमौ न सर्वस्य सर्वदा, 'घटोऽयं पटोऽय'–मित्यात्मकानुभवस्थले 'ब्रह्मेदं ब्रह्मेद' मित्याकारकबोधानुदयादथ क्वचित्कस्यचिद् ब्रह्मविदस्तद्भावस्य निरवद्यत्वेऽपि तत्र व्यवहारस्यासार्वजनीनत्वाच्चेति।

वयन्त्वत्र ब्रूमः–

**जातिव्यक्तिविभागोऽयं यथा वस्तुनि कल्पितः।** (श्रीमद्भा. 6/15/8)

इति श्रीमद्भागवतोक्तरीत्या सिद्धान्तेऽस्मिन् वस्तुतो जातिव्यक्तिविभाग एव नाभ्युपगम्यते तथापि व्यावहारिक्यामवस्थायाम्, 'अयं घटोऽयमपि घट' इत्यादावनुगतप्रतीतिजननसामर्थ्यादाकृतौ जातावैव सङ्केतः सम्प्रधारयामोऽनेकसमवेतत्वेऽप्येकत्वस्वभावाद् व्यक्तेराक्षेपशालित्वाच्चेति। यत्तु जातेरमूर्त्तत्वान्नामगुणक्रियादिनिरपेक्षत्वाच्च, 'रक्तघटोऽयं चलः कर्बुनोऽयमचलो' डित्थाख्योऽयं वृषभः पुरतश्चरति डवित्थाख्योऽसौ गोष्ठे तिष्ठती''त्यादौ लोकव्यवहारे घटत्वस्य गोत्वस्योभयत्रैकत्वेऽपि व्यक्तीनां पृथक्पृथगवबोधनान्न जातौ सङ्केतग्रहः शक्यस्वीकरण इति कश्चिदाचक्षीत चेत्तन्न सम्यक्; भवत्प्रत्तनिदर्शन उभयत्र विशेषणधर्माणामेव रक्तचलडित्थादिविशेषणैर्व्यावृत्तिर्न विशेष्यरूपयोर्घटवृषभयोः, किञ्च शब्दसङ्केतेन जातिरूपस्थिरविशेष्यस्य ग्रहणादेव

अवापोद्वापप्रकियया[3] विशेषणद्वारेण तद्युक्तव्यक्तीनां भिन्नतयाऽवधारणं शक्यमिति नः सिद्धान्ते न किञ्चिद् दुष्यति।

वस्तुतः सृष्टिकर्तुर्ब्रह्मणः (प्रजापतेः) पदार्थकल्पनैव जातिः कल्पारम्भे, 'स भूरिति व्याहरत्स भूमिमसृजद्'[4] इति तैत्तिरीयब्राह्मणोक्तप्रामाण्याच्छब्दस्य सङ्केतो जातावेव, तेनैव च सृष्टिप्रस्तारस्तद्यथा श्रीमद्भागवते–

**विरिञ्चोऽपि तथा चक्रे दिव्यं वर्षशतं तपः।**
**तद्विलोक्य वियद्व्यापि पुष्करं यदधिष्ठितम्।**

**अनेन लोकान्प्राग्लीनान्कल्पितास्मीत्यचिन्तयत्।।** (श्रीमद्भा. 3/10/4,5)

इत्यादौ लोकादीनां लोकजातानाञ्च प्रवर्त्तमानकल्पस्त्रष्टव्यानां पदार्थानामाकृतिं चिकीर्षितां बुद्धावालिख्य ब्रह्मा तान्सृजति; सृष्टिरियं शब्दपूर्विकैव-

**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।**

**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः।।** (कूर्म्मपुराणे 1/2/27)

**नामरूपञ्च भूतानां कर्म्मणाञ्च प्रवर्त्तनम्।**

**वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः।।** (तत्रैव, 1/7/64)

**सर्वेषां स तु नामानि कर्म्माणि च पृथक्पृथक्।**

**वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः।।** (मनुस्मृतौ 1/21)

इत्यसकृत्स्मरणात्। इत्थं सृष्टिकर्त्तुः सृष्टेः प्राग्जातावेव शब्दसङ्केत इति युज्यते, व्यक्तीनान्तु जलबुद्बुदवदुत्पादविनाशशीलत्वात्तासु जातिगृहीतएवानुस्मर्यते मानवादिभिः। अथवा, ''यः शुक्लवासा स देवदत्त' इतिवद् 'या एवमाकृतिका सा गौः' इत्युपलक्षणेनापि व्यक्तिबोधसम्भवात्केवलायां जातौ शक्त्यङ्गीकारो निरवद्य इत्युक्तपूर्वाणां शुद्धाद्वैतिनां व्यक्तौ सङ्केतग्रह इति मतं न युक्तमुत्पश्यामः। अनेन शब्दार्थयोर्जनकजन्यभावोऽपि व्याख्यातः।

एतदनु विचार्यतेऽत्र शब्दशक्तीरभिलक्ष्य। श्रीमद्भागवते शास्त्रे मुख्या लक्षणा गौणी व्यञ्जनेति चतुष्टयी समभ्यूहितुं शक्या शब्दशक्तीनाम्। एतासां निदर्शनपूर्वकप्रतिपादनस्य नात्रावसरःप्रसङ्गान्तरात्। अथ ''कथं साहित्यशास्त्र एव केवलं किञ्चिल्लब्धप्रसरा प्राचीनशास्त्रेष्वन्यत्र

क्वाप्यनालोचितचरीयं वराकी व्यञ्जनाऽत्र भवद्भिराविष्क्रियत इति पर्यनुयोगं सङ्क्षिप्ताक्षरैरुत्तरयामः–

**ओङ्काराद् व्यञ्जितस्पर्शस्वरोष्मान्तस्थभूषिताम्।**

इति मूलग्रन्थ एवात्र प्रमाणम्। पूर्वोदाहृते च द्वादशस्कन्धवचनेऽपि–

**शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक्।**

**येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः॥** (6/40)

इत्यत्र, 'वाग्व्यज्यत' इत्याख्यातेन 'व्यक्ति'रिति कृदन्तेन च व्यञ्जनाव्यापारस्वीकारपरत्वमेवाभिप्रेयते श्रीमद्भागवतर्षिणेति युक्तमुद्भावयामः। एतदेव च स्फुटमुपदर्शयति 'भावार्थदीपिका'–कारः श्रीश्रीधरस्वामिवर्य्यः–

**ओङ्कारश्चात्र हृद्गतः सूक्ष्मोऽभिप्रेतो न त्वकारादिवर्णरूपस्तस्य व्यङ्ग्यकोटित्वात्।**[5]

**इमं स्फोटमव्यक्तमोङ्कारं येन वाग्बृहती व्यज्यते।**[2]

**इति व्यञ्जनाख्या शब्दवृत्त्यत्राभ्युपगतेत्यास्थेयमास्थावद्भिः।**

श्रीमद्भागवते पूर्वोक्तद्वादशस्कन्धस्यायमाशयो यत्सूक्ष्मरूपोऽयमोङ्कारो व्यञ्जको ध्वन्यात्मिका (वैखरी-) वागभिव्यङ्ग्येति। तदेतदेव समर्थयन्नाह 'तपरस्तत्कालस्येति पाणिनीयसूत्रभाष्यप्रदीपे तत्रभवान् कैय्यटः–

**"ध्वनिः स्फोटश्च, व्यङ्ग्यो व्यञ्जकश्च स्तः।"**

इति शब्दशास्त्रदिशाऽपि न न प्रमाणप्रतिष्ठिता नः प्रतिपत्तिः।

सम्प्रति शब्दस्य प्रवर्तकत्वेऽपि किञ्चिद् विमृशामोऽत्र सङ्क्षेपेण। वादिभिः शब्दश्रवणान्तरभाविन्यां प्रवृत्तौ शब्दस्यैव कारणता व्यवस्थीयते। तत्र प्रवर्तकवाक्यस्य स्वरूपं वक्तुस्तात्पर्यज्ञानं लोके, वेदे तु तस्यापौरुषेयत्वात् पुरुषस्थित्यनङ्गीकाराच्छब्दनिष्ठज्ञानमाख्यातनिष्ठा शाब्दीभावना भाट्टमते, नियोगः प्रभाकरमते, इष्टसाधनताकृतिसाध्यताबलवदनिष्टाननुबन्धित्वज्ञानमिति तार्किकमत इति षट्पक्षाः सम्भवन्ति। श्रीमद्भागवते प्रवर्तकत्वन्न जडस्य शब्दस्य किन्तु वेदरूपचैतन्यशब्दद्वारेण भगवतः श्रीहरेरेव, यथोक्तं तत्रैव–

**कर्माकर्मविकर्मेति वेदवादो न लौकिकः।**

**वेदस्य चेश्वरात्मत्वात्तत्र मुह्यन्ति सूरयः॥** (19/3/43)

***************************************************************

भागवतदर्शने सृष्टिचक्रसम्प्रवर्त्तनायैव वेदानां वाङ्मयत्वम्। पर्य्यन्ते वाङ्मनोऽनिरुक्तेऽव्याकृततत्त्व एव वेदाः पर्यवस्यन्ति तत्र वेदानां ज्ञानमयत्वमेवावशिष्यते शब्दास्तत्राशब्दत्वमुपयान्ति। व्यवहारदशायामपि प्राज्ञानां कृते शब्दस्वरूपं, शब्दस्य नैका विच्छित्तयस्तास्ताः प्रवृत्तयो निवृत्तयश्च भगवन्तमेवाभिप्रयन्ति किन्तु मायामोहितमानसा जनास्तन्न जानन्ति। इदमेव वेदानां परोक्षवादत्वम्। शब्दात्मकोऽयं वेदसन्दोहः पारमार्थिक्यामवस्थायां मायामनूद्य ताञ्च प्रतिषिध्यान्ते प्रसीदतीति तत एवावगन्तव्यम्–

**मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम्।**

**एतावान्सर्ववेदार्थः शब्द आस्थाय मां भिदाम्।।**

**मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति।** (श्रीमद्भा. 11/21/43)

व्यावहारिकं भाषादर्शनम् – श्रीमद्भागवते तत्त्वप्रतिपादनस्य नैका सरण्योऽभिमतास्ताश्च तत्तद्विशेषणान्वितभाषाशब्देन तत्र तत्र विप्रकीर्णा ग्रन्थकलेवरे ता दिङ्मात्रं, यथा–

**(क) परोक्षभाषा–**

**परोक्षवादा ऋषयः परोक्षं मम च प्रियम्।** (श्रीमद्भा. 11/21/35)

**अध्यात्मपारोक्ष्यमिदं मयाऽधिगतमद्भुतम्।** (तत्रैव 4/30/83)

**एतदध्यात्मपारोक्ष्यं गीतं देवर्षिणाऽनघ।** (4/30/83)

इत्येतेषु बहुषु स्थलेष्वन्यत्रापि च व्यञ्जनाञ्चिता वाचोयुक्ती रूपकशैली वा परोक्षभाषेति अस्याः, 'परोक्षं मम च प्रिय' मिति भगवदुक्त्याऽभ्यर्हिततत्वमपि सिद्धयति।

**(ख) 'चित्रा' 'चित्रपदार्था' वा भाषा–**

**यथाप्रकृति सर्वेषां चित्रा वाचः स्त्रवन्ति हि।** (11/14/7)

**गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम्।।** (11/6/6)

"चित्रा वाचो, वेदार्थव्याख्यानविषयाश्चित्राणि शृङ्खलाबन्धप्रायाणि पदान्यर्थाश्च यासु ताभिर्गीर्भिः" इति श्रीधराचार्य्यव्याख्यानादस्याश्छन्दोऽलङ्कारभूषितत्वं चमत्कारिताशालिगद्यपद्यबन्धबन्धुरत्वञ्चाधिगम्यते।

**(ग) 'माध्वीगीः' सञ्चिता भाषा–**इयं व्यामोहिका भ्रमविभ्रमविप्रलिप्सागर्भिताऽऽ-

************************************************************************

पातरमणीया, यया भोगिनो विषयोत्सुका मूढा विषयीक्रियन्ते–

**वदन्ति चाटुकान्मूढा यया माध्व्या गिरोत्सुकाः।** (11/4/6)

**( घ ) पुष्पितावाग्रूपा भाषा-**

**अकोविदवादाख्या वा भाषा एवं पुष्पितया वाचा** (11/21/34)

**एवं पुष्पितया वाचा** (11/21/34)

**अकोविदः कोविदवादवादा-**

**न्वदस्यथो नातिविदां वरिष्ठः।** (5/11/1)

इत्येतादृशप्रसङ्गेषु कर्म्मकाण्डमोहितानामर्थवादविभ्रान्तानामतत्त्वज्ञानां मनसि विभ्रमकारिणीं फलश्रुतिमयीं वेदवाणीमुपलक्षयति मुनिः। एवञ्च-

**( ङ ) ऋतञ्च सूनृता वाणी** (11/19/38)

**( च ) श्लक्ष्णया वाचा** (4/1/19)

**( छ ) ग्राम्यवैदग्ध्यपरिभाषया** (5/10/14)

इत्युदाहरणैरन्या अपि विविधा भाषा अधिगन्तुं शक्यन्ते। तत्त्वनिरूपणदृष्ट्या, अव्ययावृत्ति-राख्यातपदावृतिर्विशेषणवैशिष्ट्यमित्यादि नैका विच्छित्तयोऽत्र भागवतभाषायां निरतिशयं सामर्थ्यं वैचित्र्यञ्चोपजनयन्ति तथैव गीतगीता-गाथा-प्रभृतिभिरपि निरूपणप्रकारैस्तास्ता भाषा अत्र विराजन्ते।

रसशास्त्रदृष्ट्या च गोपीनां मधुपगीते भ्रमरगीते वा (दशमस्कन्धस्य सप्तचत्वारिंशेऽध्याये) तेषु तेषु पद्येषु दशाङ्गचित्रजल्पमयी काचिदाविष्कृता भाषा गौडीयगोस्वामिभिर्यथा–

**प्रेष्ठस्य सुहृदालोके गूढरोषाभिजृम्भितः।**
**भूरिभावमयो जल्पो यस्तीव्रोत्कण्ठितान्तिमः॥**
**चित्रजल्पो दशाङ्गोऽयं, प्रजल्पः परिजल्पितम्।**
**विजल्पोज्जल्पसञ्जल्पा अवजल्पोऽभिजल्पितम्॥**
**आजल्पः प्रतिजल्पश्च सुजल्पश्चेति कीर्त्तिताः।**
**एष भ्रमरगीताख्यो दशमे प्रकटीकृतः॥**

(उज्जवलनीलमणेः स्थायिभावप्रकरणे 178-180 कारिकाः)

**श्रीमद्भागवतशास्त्रं समाधिभाषायाः ग्रन्थः—**आचार्यवल्लभादिभिः श्रीमद्भागवतस्य तत्त्वविश्लेषणपरैष्टीकाकारैः श्रीमद्भागवतं समाधिभाषायां भगवद् व्यासेन रचितमिति स्वीयसिद्धान्तग्रन्थेष्वसकृद् व्यलेखि, यथा–

**व्यासस्य समाधिभाषा भागवतम्। तत्रापि यन्न लौकिकरीत्या वदति यथा— "अथौषस्युपवृत्तायाम्** (श्रीमद्भा. 10/70/1) **इत्यादि नापि परमतरीत्या, "श्रुतं द्वैपायनमुखात्"** 'श्रीमद्भा. 6/14/19) इत्यादि। यावत्समाधौ स्वयमनुभूय निरूपितं सा समाधिभाषा।

(तत्त्वार्थदीपनिबन्धे शास्त्रार्थप्रकरणे सप्तमकारिकायां स्वयमाचार्यकृता 'प्रकाशव्याख्या)

अस्य निरूपणस्याधारः श्रीमद्भागवतस्यायं श्लोकः–

**अथो महाभाग भवानमोघदृक्**

**शुचिश्रवाः सत्यरतो धृतव्रतः।**

**उरुक्रमस्याखिलबन्धमुक्तये**

**समाधिनाऽनुस्मर तद्विचेष्टितम्।।** (श्रीमद्भा. 1/5/13)

वस्तुतः शास्त्राणां तिस्रो भाषा भवन्ति–समाधि–भाषा–लौकिकीभाषा–परकीया भाषा चेति–

**समाधिभाषा प्रथमा लौकिकी च तथा परा।**

**तृतीया परकीयेति शास्त्रभाषा त्रिधास्मृता।।**

इत्येषा प्राचीनोक्तिः। भागवतशास्त्रे समाधिभाषाया एव प्राधान्यं लौकिकीपरकीये त्वत्र तामेव पुष्णीतस्तस्मात्ते गुणीभूताः अत्राप्याह श्रीवल्लभाचार्यवर्यः–

**लौकिकी चान्यभाषा च समाधेः पोषिके तु ते।**

**ते प्रमाणमभिप्रायात्सर्वथा पूर्ववन्नहि।।**

(तत्त्वार्थदीपनिबन्धे, भागवतार्थप्रकरणे कारिका 12)

इत्थं पुराणोत्तमे श्रीमद्भागवते प्रतिबिम्बितं भाषादर्शनं दिङ्मात्रमुपदर्शितं सुधियामाह्लादसंवर्द्धनायेति शम्।

## सन्दर्भग्रन्थः

1. श्रीमद्भागवततत्त्वबिन्दुः (डॉ.विन्ध्येश्वरीप्रसादमिश्रो 'विनयः') न्यू भारतीय बुककार्पोरेशन, दिल्लीतः प्रकाशितो ग्रन्थः

2. इमं स्फोटमव्यक्तमोङ्कारम्। (श्रीमद्भा. 12/3/39 इत्यत्र भावार्थदीपिका टीका)

3. पृथक्पृथक्स्थितिविशेषे विशेष्ये कस्मिंश्चिद्, विशेषणानां योजननिस्सारणरूपा वाक्यार्थ-बोधात्मिका मानसी काचन पद्धतिराविर्भवति शाब्दबोधप्रक्रियायामिति प्राभाकरप्रघट्टके प्रसिद्धम्।

4. तैत्तिरीयब्राह्मणे 2/2/4/2

5. श्रीमद्भा. 11/21/39 इत्यत्र भावार्थदीपिका (श्रीधरीटीका)

6. तत्रैव, 12/6/40 इत्यत्र 'भावार्थदीपिका'



**आचार्य्यः**

संस्कृतविद्याधर्मविज्ञानसङ्काये

(वैदिकदर्शनविभागे)

काशीहिन्दूविश्वविद्यालये

वाराणस्याम्




# विश्वं महेश्वरे भाति संवित्स्वातन्त्र्यजृम्भितम्

**प्रो. कमलेश झाः**

महेश्वरस्य भगवतः प्रकाशसंज्ञा प्रथते। प्रकाशः स्वभावी, विमर्शस्तु तत्स्वभावः। नच स्वभावस्वभाविनोः वस्तुभेदो भवति। अत एव तु न भिद्यते वह्निर्दाहाद् दाहो वा वह्नेः। स्वभावादेव विमर्शरहितः प्रकाशः स्वीकर्तुं वक्तुं वा न शक्यते। विमर्शस्यैवापरं नाम विद्यते स्वतन्त्रता शक्तिश्च। सा च प्रकाशनक्रियाकर्तृत्वलक्षणा शिवसमाश्रिता विलसति। एनामेव पुरस्कृत्य शिवः स्वभित्तौ स्वेच्छया सर्वं विश्वमवभासयति। प्रमातृ-प्रमाण-प्रमेयेति त्रिधा संविभक्तस्य सकलस्य विश्वस्य प्रकाशमानतां यत्प्रयच्छति शिवः तदेवोच्यते शिवः स्वात्मैकात्म्येन सर्वं विश्वमवभासयति। इदमेव कारणं शिवस्य प्रकाशसंज्ञाप्रथने। मम भाति, तव भाति, देवदत्तस्य भाति–इत्येवं यद् विश्वं प्रकाशमानं भवति ततोऽयं निष्कर्षः प्राप्यते–प्रकाशात्मकतानतिरेकि विश्वमिति। प्रकाश एव विश्वस्य वास्तविक आत्मा, यतोहि प्रकाशसंलग्नस्यैव तस्य भानं जायते नान्यथा। न च कथमपि स्वीकर्तुं शक्यते प्रकाशाद् भेदो विश्वस्य। प्रकाशाद् भेदे सति विश्वस्य या प्रकाशमानता प्रतीयते सा कथंचिदपि नोपपत्तिमञ्चति। एवञ्च स्पष्टमिदमुक्तं भवति–अवभासमानमिदं घटपटाद्यात्मविश्वं प्रकाशमहेश्वरादनतिरिक्तं विद्यते।

अत्र काचन जिज्ञासा स्वरसतः समुदेति। प्रकाशनक्रियाकर्तृता प्रकाशमहेश्वरे यदुल्लसति प्रकाशस्यैव सा प्रकाशमानता, न तु विश्वस्य। तदेवं प्रकाशः प्रकाशते इत्येवानुभूतिः स्यान्न पुनः विश्वं प्रकाशते इति। तद्विपरीतं प्रतीतिरेषा प्रथते–नीलमवभासते, सुखमवभासते, घटोऽवभासते पटोऽवभासते–इत्येवमादिः। तदेवं यद् विश्वप्रकाशनं तन्न शक्यते प्रतिषेद्धुम्। तस्य चैतस्य विश्वप्रकाशनस्य कृते का वा युक्तिरुपपत्तिर्वा जागर्तीति। यद्यपि प्रकाशः शिवः विश्वन्तु न शिवः अथापि विश्वं यद् अवभासते–तत्र युक्तेः गवेषणायामारब्धायामेष निष्कर्षोऽवाप्यते संवित्स्वातन्त्र्यस्यैवैष महिमा यत्प्रकाशाभिधो महेश्वरः स्वभित्तौ अतिरिक्तायमानं विततं विचित्रं विश्वमवभासयति–इति। अयमाशयः–दर्पणभित्तिलग्नं मुखं घट–पटादिकं वा चित्रं वस्तु यत् प्रतिबिम्बति, ततोऽनतिरिक्तमपि तदतिरिक्ततया यद् भासते तद्वद् चिद्–दर्पणे चित्रविश्वप्रतिबिम्बनं

ततोऽनतिरिक्तमपि तदतिरिक्ततया स्वातन्त्र्यमहिम्ना यदवभासते तन्नानुपपन्नं विश्वस्यावभासनमिति। तद् यथोक्तम्–

**निर्मले मकुरे यद् वद् भान्ति भूमिजलादयः।**

**अमिश्रास्तद्वदेकंस्मिंश्चिन्नाथे विश्ववृतयः॥**[1]

**रूपादिपञ्चवर्गोऽयं विश्वमेतावदेव हि।**

**गृह्यते पञ्चभिस्तच्च चक्षुरादिभिरिन्द्रियैः॥**[2]

एतदत्र विशिष्यावगन्तव्यम्–देवदेवस्य संविन्महेश्वरस्य नैर्मल्यं द्विविधं भवति–मुख्यममुख्यं च। तत्र मुख्यं नैर्मल्यं नाम सर्वतः स्वच्छत्वम्। तदेतद् मुख्यं नैर्मल्यं संविन्महेश्वरे तिष्ठति। अथ यदमुख्यं नैर्मल्यं तत्तु अंशांशिकातः स्वच्छत्वम्, तदेतद् संविद इच्छया यत्किञ्चिदेव रूपं, स्पर्शः तदन्यद् वा कुत्रचिदेव दर्पणादौ विलसति। पृथिव्यप्तेजःसु एव रूपं तिष्ठति। अत एव पार्थिवविशेषे दर्पणादौ आप्यविशेषे जलाशयादौ तैजसविशेषे चक्षुरादौ च रूपस्य स्वच्छत्वात् तस्यैव प्रतिबिम्बनं जायते न तु रसादेः। अथ यत्र रसस्य स्वच्छता तत्र रसस्यैव प्रतिबिम्बनं भवति। एवं स्पर्शादेरपि विषये बोध्यम्। यथोक्तम्–

**नैर्मल्यं मुख्यमेकस्य संविन्नाथस्य सर्वतः।**

**अंशांशिकातः क्वाप्यन्यद् विमलं तत्तदिच्छया॥**[3]

**सदृशं भाति नयनदर्पणाम्बरवारिषु।**

**तथाहि निर्मले रूपे रूपमेवावभासते॥**[4]

**नैर्मल्यं यस्य यत्रास्ति तच्च तत्रावभासते।**

**सर्वनैर्मल्यसम्पन्ने चिद्रूपे सर्वमेव हि॥**[5]

**यथा निर्मलरूपे हि रूपस्य प्रतिबिम्बनम्।**

**तथैव निर्मलस्पर्शे स्पर्शस्य प्रतिबिम्बनम्॥**

**दन्तोदके रसस्यापि स्पर्शस्यानन्दधामनि।**

**घ्राणे गन्धगुणस्यापि प्रतिबिम्बं कदाचन॥**[6]

एतदुक्तं भवति–आभाससारत्वाविशेषेऽपि ज्ञानशक्तिस्वभावे स्वच्छे क्रियाशक्तिस्वभावस्य अस्वच्छस्य प्रतिबिम्बनं भवति। ततश्च वस्तुतः चिदेव संवित्स्वातन्त्र्यात् बिम्बप्रतिबिम्बतया चित्रं यदवभासते तदेव विश्वमित्युच्यते न ततोऽन्यत् किञ्चनैतत्। ततश्च शिवो भातीति विश्वं भातीति च न शिवादतिरिच्यते भानम्। यथोक्तम्–

**भावानां यत् प्रतीघाति वपुर्मायात्मकं हि तत्।**

**तेषामेवास्ति सद्विद्यामयं त्वप्रतिघातकम्।।**[7]

इदमप्यत्रावधेयम्–प्रतिबिम्बभिन्नं यद् बाह्यं वस्तु घटादिकं तस्योत्पत्तौ कारणापेक्षा भवति अन्यथा सर्वं सर्वस्माद् भवेत्। किन्तु उत्पत्त्यनन्तरं वस्तुनः या स्थितिर्भवति तत्र कारणसापेक्षता नेष्यते। दृश्यते हि लोके चक्रादिकमपेक्ष्यैव घट उत्पद्यते। उत्पन्नस्य पुनरस्य घटस्य चक्रादिपरिहारेणैव स्थितिरुपलभ्यते। तद्विपरीतं प्रतिबिम्बात्मकस्य मुखादेः दर्पणादेः निमित्तस्य अपेक्षां विना स्वातन्त्र्येण स्थितिः नैवोपलभ्यते। अतः प्रतिबिम्बस्य घटादेरिव न स्वतन्त्रं, स्थायि अस्थायि स्थिरम् अस्थिरं वा रूपमिष्यते अतः बाह्याद् घटादेः भिन्नरूपता प्रतिबिम्बात्मनो मुखादेः विद्यते। अथ शशविषाणादेस्तुच्छादपि प्रतिबिम्बात्मनो मुखादेर्भिन्नरूपता भवति। अवस्तुनः शशविषाणादेरवभासनन्तु कदापि न भवति तद्विपरीतं प्रतिबिम्बात्मकं मुखादिकं तु सर्वस्यावभासते। अतः प्रतिबिम्बं बाह्यवस्तुनः घटपटादेर्भिद्यते। अवस्तुनः शशविषाणादेरपि भिद्यते प्रतिबिम्बम्। अतस्तार्तीयं रूपं प्रतिबिम्बस्य नितरामेष्टव्यम्। तदेव कीदृशमिति जिज्ञासायां गुरुभिरुक्तम्–

**न देशो न रूपं न च समययोगो न परिमा**

**न चान्योन्यासङ्गो न च तदपहानिर्न घनता।**

**न चावस्तुत्वं स्यान्न च किमपि सारं निजमिति**

**ध्रुवं मोहः शाम्येदिति निरदिशद् दर्पणविधिः।।**[8]

दृष्टान्ते दर्पणप्रतिभासानां मुखादीनां दर्पणसंलग्नतया एवावस्थितिर्भवति अथापि तद्भिन्नतया प्रथनं भवति। दर्पणादन्यत्र मुखादीनान्तु नावस्थानम् न च ततः कथंचनापि पृथक्त्वं भवति। तद्वद् दार्ष्टान्तिके संविन्महेश्वरे प्रतिभासमानानामपि घटपटादीनां बाह्यवस्तूनां विश्वपदवाच्यानां भगवतैव आभासमात्रसारतया प्रथनं भवति, न पुनरेषां वास्तवं बहीरूपतया सत्त्वं भवतीति

तत्र तत्र लोकैर्योऽभिनिवेशः या वा आसक्तिर्विधीयते तत्र साधु–इत्येव- मुपदेशः स्वरसतः शैवागमदार्शनिकैराचार्यैर्विधीयते। सत्यमेवोक्तम्–

**यथान्तर्निर्मलादर्शे भान्ति भावा विरोधिनः।**

**अनामिश्रास्तथैतस्मिंश्चिन्नाथे विश्ववृत्तयः।।**[9]

तदेवं निखिलमपीदं नीलसुखाद्यात्म विश्वं संवित्यात्मनो महेश्वरस्य एकस्य तत्त्वादप्रच्यु-तस्यानतिरिक्तं भवदपि यदतिरिक्ततया भासते तत्र तदीयस्वातन्त्र्यं विमर्शापरनामधेयं बिम्बस्थानी-यमेव परमं महः परममाहात्म्यशालि चकास्ति।

इयांस्तु विशेषः–दर्पणे पुरोभागे एव प्रतिभासो मुखादेः, खड्गे पुनरपरभागेऽपि, स्फटिके तु सर्वतः प्रसरति। अथ सर्वस्वच्छभूते संविन्महेश्वरे तु सर्वतः सर्वमेव रूपादिकमवभासते इति बोधात्मनः संविदः सर्वस्वच्छता अत्यन्तं विशदा समाभाति। आदर्पणमाच्च स्फटिकं प्रतिबिम्बनिमित्तस्य स्वाकृतिरपि भासते परं संविदो विश्वप्रतिबिम्बनिमित्तायाः यन्नैव स्वाकृत्यवभासनं तदेतदत्यन्तस्वच्छता चकास्ति। यथोक्तम्–

**यथा च सर्वतः स्वच्छे स्फटिके सर्वतो भवेत्।**

**प्रतिबिम्बं तथा बोधे सर्वतः स्वच्छताजुषि।।**

**अत्यन्तस्वच्छता सा यत् स्वाकृत्यनवभासनम्।**

**अतः स्वच्छतमो बोधो न रत्नं त्वाकृतिग्रहात्।।**[10]

यथाहि विरहिणः संकल्पादौ बिम्बाभावेऽपि तीव्रतरस्मरणादिना कान्ताप्रतिबिम्बं भातं भवति तथा बिम्बाभावेऽपि बिम्बस्थानीया ज्ञानक्रियाद्यात्मशक्तिरेव महेश्वरस्वभावभूता निमित्तमिष्यते वैचित्र्यचित्रितस्य घटादेर्विश्वस्य प्रतिबिम्बने। विमर्शरहितस्य प्रकाशस्य प्रदीपादेर्न वास्तवप्रकाशसंज्ञा चिन्मयता वा भवति। अत एव दर्पणादेः प्रतिबिम्बनिमित्तस्य जडरूपता भवति। तद्वैपरीत्येन संविदो विश्वप्रतिबिम्बनिमित्तभूतायाः पुनश्चैतन्यरूपता वास्तवप्रकाशरूपता सविमर्शत्वादेष्टव्या।

यथोक्तम्– **इत्थं विश्वमिदं नाथे भैरवीयचिदम्बरे।**

**प्रतिबिम्बमलं स्वच्छे न खल्वन्यप्रसादतः।।**[11]

**अन्तर्विभाति सकलं जगदात्मनीह**

**यद्वद्विचित्ररचना मकुरान्तराले।**

**बोधः पुनर्निजविमर्शनसारवृत्त्या**

**विश्वं परामृशति नो मकुरस्तथा तु।।**[12]

सा चैषा विमर्शशक्तिः प्रतिभा कौलिकीति च व्यपदिश्यते। भगवान् महेश्वरः योगीव निरुपादानं संवित्स्वातन्त्र्यमहिम्ना विश्वं घटपटाद्यात्म स्वविमर्शस्थितं स्वेच्छया बहिः प्रकाशयेदिति संवित्स्वातन्त्र्यं किमपि विजयतामिति शम्।।

**विश्वैकरूपविश्वात्मविश्वसर्गादिकारणम्।**

**परप्रकाशवपुषं स्तुमः स्वच्छन्दभैरवम्।।**[13]

## सन्दर्भ-ग्रन्थ


1. श्रीत. 3/4
2. उद्धृतं, तत्रैव विवेके
3. श्रीत. 3/9
4. तत्रैव 3/5
5. श्री पू.प्र.का. 1/355
6. तत्रैव 1/350-51
7. श्रीत. 3/10
8. तत्रैव 3/23
9. विवेके उद्धृतम् पृ.29
10. श्रीत. 3/47-48
11. तत्रैव 3/65
12. तत्रैव विवेके उद्धृतम्
13. स्वच्छन्दतन्त्रम् - 30, खण्ड-1, पृ.1



**प्रो. कमलेश झाः**

अध्यक्षः धर्मागमविभागः

सं.वि.ध.वि.संकायः, का.हि.वि.वि.

वाराणसी।

# व्याकरणस्य विषयः

प्रो. गोपबन्धु मिश्रः

प्रत्येकं शास्त्रस्य अधिकारी, विषयः, सम्बन्धः प्रयोजनं चेति अनुबन्धचतुष्टयं भवति। अनुबन्धत्वं नाम अध्ययनविषयकप्रवृत्तिप्रयोजकज्ञानजनकज्ञानविषयत्वम्, अधिकार्यादिषु चतुर्षु अनुबन्धेषु एतस्याः परिभाषायाः सुसङ्गतत्वात्। एतेषु अनुबन्धेषु विषयाख्यः द्वितीयः अनुबन्धः सम्बद्धशास्त्रस्य प्रतिपाद्यः प्रमेयभूतः पदार्थः भवति। शास्त्रं तस्य विषयस्य प्रतिपादकं भवतीति कारणात् शास्त्रेण सह तस्य प्रतिपाद्यप्रतिपादकभावः सम्बन्धः भवति।

'अथ शब्दानुशासनम्' इत्युक्तवता महाभाष्यकारेण 'रक्षोहागमलध्वसन्देहाः प्रयोजनम्' इत्यादिवाक्येन प्रयोजनं कथितमस्ति।[1] तद्व्याख्याकारः कैयटाचार्य आह–''भाष्यकारो विवरणकारत्वाद् व्याकरणस्य साक्षात् प्रयोजनमाह–अथ शब्दानुशासनमिति। प्रयोजनप्रयोजनानि तु रक्षोहादीनि पश्चाद् वक्ष्यति।''[2] एतां व्याख्यामनुसृत्य शब्दज्ञानं शब्दानुशासनं वा व्याकरणस्य मुख्यं प्रयोजनं मन्वानो नागेशभट्टः प्रदीपोद्योते एतद्व्याकरणशास्त्रस्य इतरान् अनुबन्धान् एवं व्याख्याति–''तत्र शब्दज्ञानरूपे प्रयोजने उक्ते विषयोऽप्युक्त एव। शास्त्रजन्यज्ञानविषयस्यैव शास्त्रविषयत्वादिति बोध्यम्। तज्जिज्ञासुरधिकारी, प्रतिपाद्यप्रतिपादकभावः सम्बन्ध इति अर्थादेव बोध्यम्।''[3] एतदनुसारमेष फलितार्थो निष्पद्यते–व्याकरणशास्त्रस्य साधुशब्दजिज्ञासुः अधिकारी, साधुशब्दः विषयः, व्याकरणशास्त्रेण सह एतस्य विषयस्य प्रतिपाद्यप्रतिपादकभावः, शब्दज्ञानं च प्रयोजनम् इति अनुबन्धाः चत्वारो भवन्ति। तत्र च ''ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्''[4] इत्युक्तेः शब्दज्ञानस्य विषये शब्दे स्थितेऽपि तथा च शब्दस्य ज्ञाने जातेऽपि तस्य फलं किमिति प्रश्नः साक्षाद् उदेति। अर्थात् केवलं शब्दज्ञानं जातं चेत् व्याकरणस्य प्रयोजनं तु सिद्धम्। किन्तु प्रत्येकं प्रयोजनेन फलवता भवितव्यम् इत्येतस्माद् हेतोः एतस्य प्रयोजनस्य फलं किमिति जिज्ञासा तिष्ठत्येव। एतस्या जिज्ञासायाः समाधानप्रसङ्गे एवं कथयितुं शक्यते यत् शब्दज्ञानेन धर्मः मोक्षो वा फलरूपेण लभ्यते। तत्र प्रमाणरूपेण महाभाष्योक्तिः प्रवर्तते– ''शब्दज्ञाने धर्मः, अपशब्दज्ञानेऽधर्मः''[5] इति।

वाक्यपदीये व्याकरणस्य अष्ट विषया उक्ताः सन्ति। ते च द्विविधः शब्दः, द्विविधोऽर्थः, द्विविधः सम्बन्धः, द्विविधं च फलमिति कथिताः सन्ति।

**द्विविधः शब्दः–**(1) अन्वाख्येयः, (2) प्रतिपादकः च। अन्वाख्यातुं शक्यः अन्वाख्येयः, यथा–'राम' इति (रम् + घञ् इति तत्र अन्वाख्यानम्। प्रतिपादयत्यर्थम् इति प्रतिपादकः अपरः शब्दविशेषः, यथा–डित्थादिः अव्युत्पन्नः शब्दः। तत्र प्रतिपादकत्वं तु अस्ति, किन्तु अन्वाख्यानं नास्ति इति भावः।

**द्विविधः अर्थः–**(1) अपोद्धारपदार्थः, (2) स्थितलक्षणश्च। अपोध्रियन्ते पृथक् क्रियन्ते पदार्थाः यस्मात् सः, यथा–पठ् + ति = पठति (अत्र प्रकृतिप्रत्यययोः काल्पनिकः प्रविभागः क्रियत एव)। स्थितलक्षणो नाम अखण्डवाक्यार्थः।

**द्विविधः सम्बन्धः–**(1) कार्यकारणभावः, (2) योग्यभावश्च। 'घट' इति शब्दः घटरूपार्थस्य कारणम्, एष कार्यकारणभावः सम्बन्धः श्रोतुः दृष्ट्या निश्चीयते। किं च यथा घटरूपोऽर्थः 'घट' इति शब्दविशेषस्य उच्चारणे कारणं भवति, तदा एष कार्यकारणभावः सम्बन्धः वक्तुः दृष्ट्या इति निश्चेतुं शक्यते।

**द्विविधं फलम्–**(1) धर्मः, (2) प्रत्ययः च साधुशब्दस्य उच्चारणेन धर्मो भवति, प्रत्ययः अर्थात् अर्थबोधोऽपि भवति। असाधुशब्दस्य उच्चारणेन अर्थबोधस्तु भवति, किन्तु धर्मो न भवतीति साधुशब्दप्रयोगस्य विशिष्टमुभयनिष्ठं फलं कथितमस्ति। वैयाकरणाः साध्वसाधु इति उभाभ्यां शब्दाभ्याम् अर्थबोधो भवतीति मतं पोषयन्ति। तर्हि साधुशब्दप्रयोगे यत्नस्य फलाभावः शङ्क्य इति चेत् कथ्यते–साधुशब्दप्रयोगेणैव धर्मावाप्तिः, न तु असाधुशब्दप्रयोगद्वारा इति साधुशब्दप्रयोगे वैशिष्ट्यं वरीवर्ति। तदेव कथ्यते भाष्यकारेण–

"समानायामर्थावगतौ शास्त्रेण धर्मनियमः क्रियते।" इति। तथा चाऽऽह भर्तृहरिर्वाक्यपदीये–

**शिष्टेभ्य आगमात् सिद्धाः साधवो धर्मसाधनम्।**

**अर्थप्रत्ययनाभेदे विपरीतास्त्वसाधवः॥** वा.प.1/27

उक्ताम् अष्टपदार्थीमेवंप्रकारेण आह भर्तृहरिः–

**अपोद्धारपदार्था ये ये चाऽर्थाः स्थितलक्षणाः।**

**अन्वाख्येयाश्च शब्दा ये ये चाऽपि प्रतिपादकाः॥**

**कार्यकारणभावेन योग्यभावेन च स्थिताः।**

**धर्मे ये प्रत्यये चाङ्गं सम्बद्धाः साध्वसाधुषु॥** वा.प. 1/24,25

इदानीं महाभाष्यवाक्यपदीययोर्मते समीक्ष्य एवं विमर्ष्टुं शक्यते। व्याकरणं शब्दशास्त्रमस्ति। शब्द एव अर्थरूपेण विवर्तते इति विवर्तवादम् उपस्थापयता आचार्येण भर्तृहरिणैव उक्तम्। किं च सर्वविधं ज्ञानं शब्देनैव भासमानं भवतीति तदीयं वचनमेवं स्फुरति–

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**

**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥** वा.प. 1/123

एष शब्दः बौद्धः बाह्यश्चेति वैयाकरणाः। बौद्धशब्दं विवक्षुणा भर्तृहरिणा प्रोच्यते–

**नादैराहितबीजायामन्त्येन ध्वनिना सह।**

**आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते॥** वा.प.1/84

श्रोत्रेन्द्रियग्राह्यात् बाह्यात् शब्दात् एष बौद्धः शब्दः विशिष्टः अभिव्यङ्ग्यः अर्थबोधक इति वैयाकरणमतम्। अतः कथिताः शब्दार्थसम्बन्धफलभेदाः यद्यपि सङ्ख्यया अष्टेति उल्लिखिताः, किन्तु सर्वे ते बौद्धं शब्दमाश्रित्यैव प्रवर्तन्ते इति कारणेन वैयाकरणनये शब्द एव विषयः, शब्दशास्त्रं च तस्य प्रतिपादक इति निष्कर्षतया वक्तुं शक्यते।

## सन्दर्भसूची


1. महाभाष्यम्, पस्पशाह्निकम्
2. प्रदीपः, महाभाष्यम्, पस्पशाह्निकम्
3. प्रदीयोद्द्योतः, महाभाष्यम्, पस्पशाह्निकम्
4. काव्यप्रकाशः
5. महाभाष्यम्, पस्पशाह्निकम्।



**डॉ. गोपबन्धु मिश्रः**

प्रोफेसर

संस्कृतविभागः

काशीहिन्दूविश्वविद्यालयः,वाराणसी।


*****************************************************************************

# वर्तमानसमये वेदानां प्रासङ्गिकता

प्रो. महावीरः

सुविदितमेव सर्वेषामपि भारतीयानां यन्नित्यसत्येषु परमात्मनः निःश्वासभूतेषु चतुर्षु वेदेषु विश्वस्य निखिलमपि ज्ञानविज्ञानं वरीवर्ति। सृष्ट्यादौ अग्नि,-वायु,-आदित्य,-अङ्गिरानामधेयानाम् ऋषीणां परमपवित्रेषु अन्तःकरणेषु विश्वकल्याणाय एते चत्वारो वेदाः परमेश्वरेण प्रकाशिताः। न केवलं भारतीयाः विद्वांसोऽपितु वैदेशिका अपि वेदानां सर्वप्राचीनत्वमुररीकुर्वन्ति। व्याकरणमहाभाष्यकारः पतञ्जलिः वेदानां महत्त्वं गौरवञ्च उद्घोषयन् प्राह–'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च।' मनुस्मृतिकारः मनुरपि प्राह–

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते**

**एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता।**

वेदानां सर्वज्ञानमयत्वं, धर्माधाररूपत्वं, सर्वविद्यामयत्वं, विविधविज्ञानमूलरूपत्वं च मन्वानाः मन्वादयः ऋषयः प्राहुः–

**'वेदोऽखिलो धर्ममूलम्'**

**यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्तितः।**

**स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥** मनु. 2–7

सर्वेऽपि विद्वत्तल्लजाः, भारतीयाः दार्शनिकाः, आचारशिक्षाप्रवणाः स्मृतिकाराः, शब्दतत्त्वमीमांसादक्षाः वैयाकरणाः अन्ये च शास्त्रकाराः वेदानां परमप्रामाण्यं प्रतिपदम् उद्घोषयन्ति।

स्मृतिकाराणां मतमिदं यद् ब्राह्मणैः एकनिष्ठतया वेदाध्ययनरतैर्भाव्यम्। एतद् वेदाध्ययनमेव विप्राणां परमं तपः। यश्च वेदमतिरिच्य अन्यस्मिन् शास्त्रे बद्धादरो न सः द्विजः। यथा–

**वेदमेव सदाभ्यस्येत् तपस्तप्स्यन् द्विजोत्तमः।**

**वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते॥** मनु.2–166

वेदं देवादीनां नेत्रं निगदन्ति। तद्यथा-

**पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।**

**अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः॥** मनु.12/94

श्रुतीनां विषये भारतीयंदार्शनिकेषु सर्वोच्चपदे प्रतिष्ठिताः शंकराचार्यपादाः ऊचुः 'महत ऋग्वेदादेः शास्त्रस्य अनेकविद्यास्थानोपबृहितस्य प्रदीपवत् सर्वार्थविद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म। नहीदृशस्य शास्त्रस्य ऋग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः संभवोऽस्ति।'

वेदशब्दः ज्ञानार्थकाद् विद्धातोः घञ्प्रत्यये कृते सति निष्पद्यते। एवं वेदशब्दो ज्ञानार्थकः। विद् सत्तायाम्, विद् विचारणे, विद्ऌलाभे, विद् चेतनाख्याननिवासेषु इति धातुभ्योऽपि घञि वेदशब्दः निष्पद्यते। एवं वेदाः ज्ञानराशित्वाद् शाश्वतस्थायिनः, ज्ञाननिधयः, मानवहितसाधकाः, कर्त्तव्याकर्त्तव्यबोधकाः, संस्कृतेराधारभूताः, शुभाशुभनिदर्शकाः, जीवनोन्नायकाः आचारसंचारकाः, सुखशान्तिसाधकाः, ज्ञानालोकप्रसारकाः, कलाकलापप्रेरकाः, आशायाः आश्रयाः, नैराश्यविनाशकाः, चतुर्वर्गावाप्तिसोपानस्वरूपाश्च सन्ति। न केवलं संस्कृतभाषाविरचिते वाङ्मये अपितु सर्वास्वेव भारतीयभाषासु श्रुतिमहत्त्वं सर्वोत्कृष्टत्वेन प्रतिपाद्यते।

केचन अज्ञानान्धकारनिमीलितलोचनाः वेदभानोः महत्त्वं न विदन्ति। ते तु वेदाः केवलं कर्मकाण्डस्य उपासनायाः, पूजायाः वा ग्रन्थाः इति मन्यन्ते। परमस्माकं सुदृढोऽयं विश्वासो यद् वेदेषु सर्वेषां मानवानां यद्यत् कल्याणकरं तत् तत् सर्वं निहितं वर्तते। इदमेव कारणं यद् युगाद् युगान्तराणि व्यतीतानि, कालेन कवलीकृताः नैकाः संस्कृतयः सभ्यताश्च परं वैदिकी संस्कृतिः अद्यापि जीवति, न केवलं जीवति अन्यान् अपि जीवयति। रामायण–महाभारत–मनुस्मृति–गीतादिग्रन्थेषु श्लोकानां संख्या प्रतिदिनं वृद्धिंगता, तेषु–तेषु ग्रन्थेषु बहूनि पद्यानि पठित्वा भ्रमतीव मनः, परं चतुर्षु वेदेषु एकमात्रापरिवर्तनमपि नाभवत्, का कथा मन्त्रपरिवर्त्तनस्य, तत्र हेतुः वेदानां नित्यत्वं, संशयविपर्ययरहितनिर्भ्रान्तज्ञानमयत्वम्। वेदेषु कस्यापि एकस्य देशस्य, धर्मस्य, कालस्य वा वर्णनं नास्ति। तत्र न केवलं ब्राह्मणानाम् अधिकारः नापि च भारतीयानामेव, ते तु समेषां विश्वस्थानां मानवानां कृते वर्तन्ते। प्राचीनतमे काले वैदिकज्ञानस्य महत्त्वमासीत् अद्यापि वर्तते, भविष्यति कालेऽपि तन्महत्त्वं तथैव स्थास्यति।

आधुनिकाः जनाः कथयन्ति–वर्त्तमाने वैज्ञानिकयुगे, संगणकयुगे वा नास्ति वेदानां प्रासङ्गिकता, वेदास्तु केवल पुस्तकालयानां, पुरातत्त्वसंग्रहालयानामेव वा शोभां वर्धयन्तु, मन्ये तैः वेदाः नाधीताः वेदार्णवे न आलोडितम्। यदि श्रद्धया वेदाध्यनमकरिष्यन् तर्हि वेदविरुद्धं नावदिष्यन्।

अद्यतनीये हिंसादुराचारभ्रष्टाचाराकुले भयावहे विकरालकाले यदि केनापि माध्यमेन प्रेम्णः, अहिंसायाः, मित्रतायाः, सदाचारस्य, विश्वबन्धुत्वस्य च प्रतिष्ठा भवितुमर्हति, तर्हि वेदानामालोकेनैव।

आसीत्कोऽपि स्वर्णिमः कालः भारतवर्षस्य यदा अत्रत्याः सर्वेऽपि जनाः परस्परं संस्कृतं भाषन्ते स्म। तदा न केवलं मानवाः पशुपक्षिणोऽपि वेदमन्त्रोच्चारणमकुर्वन्। तस्मिन् रमणीयकाले गेहे-गेहे वेदमन्त्रध्वनिः श्रूयतेस्म, सर्वत्र यज्ञानां धूमेन पर्यावरणं शुद्धमासीत्। अत्रत्यः महीपतिः तदा उच्चस्वरेण समुद्घोषितवान्–

**न मे जनपदे स्तेनो न कदर्यो न मद्यपः।**
**नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः॥**

अद्य तु वेदाः विच्छिद्यन्ते,धर्मः विध्वंस्यते, आचारः विनाश्यते, भ्रातृभावः, मैत्रीभावः, मातृभावो वा विलयं गच्छति। परिवारेषु, समाजे, राष्ट्रे विश्वे वा अनुदिनं हिंसा, अशान्तिः एधते। भगवती श्रुतिः निगदति–

**मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा।**
**सम्यञ्च सव्रता भूत्वा वाचं वदत भद्रया॥**

तथा च– **अनुव्रतः पितुः पुत्रः मात्रा भवतु सम्मना।**
**जाया पत्ये मधुमती वाचं वदतु शान्तिवाम्॥**

वेदाध्ययनरतो यो मानवो प्रतिदिनं प्रातरुत्थाय गायति–

**प्रातरग्निं प्रातरिन्द्रं हवामहे प्रातर्मित्रावरुणा प्रातरश्विना।**
**प्रातर्भगं पूषणं ब्रह्मणस्पति प्रातः सोममुत रुद्रं हुवेम॥**
**भग एव भगवाँ अस्तु देवास्तेन वयं भगवन्तः स्याम।**
**तं त्वा भग सर्वं इज्जोहवीति स नो भग पुर एता भवेह॥**

सः किं कदापि कस्यापि अहितम् अप्रियं वा करिष्यति। स तु सर्वथा प्रार्थयते–

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्॥**

परमेशभक्तस्य वेदाध्ययनरतस्य मनसि भावोऽयं जागर्ति–

**तन्मे मनः शिवसंकल्पमस्तु।**

शिवसङ्कल्पमनाः, देवमनाः पुरुषः कामयते–

**विश्वा आशा मम मित्रं भवन्तु।**

**याश्च पश्यामि यांश्च न तेषु मा सुमतिं कृधि।।**

सः मुहुर्मुहुः भगवन्तं करुणासागरं प्रार्थयते–

**मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे, मित्रस्य चक्षुषा समीक्षामहे।**

वेदे उपदिष्टम्–मनुर्भव, ज़नय दैव्यं जनम्।

अर्थात् हे मानव! प्रथमं त्वं मानवतां धारय, तदनन्तरञ्च दिव्यगुणोपेतां सन्ततिं जनय।

अथर्ववेदस्य सुविख्याते भूमिसूक्ते ऋषिः निगदति–

**माता भूमिः पुत्रोऽहं पृथिव्याः।**

**वसुधैव कुटुम्बकम्, यत्र विश्वं भवत्येकनीडम्।**

अद्य जनाः परस्वमपहृत्य धनवृद्धिमिच्छन्ति, भोगेच्छा, धनेच्छा सततं वर्धमाना सर्वान् अशान्तान् करोति। धनं, पर धनं कामयमानाः किं किं पापकर्म न कुर्वन्ति? शोणशोणितेन धरां रञ्जयन्ति। वेदः उपदिशति–

**ईशा वास्यमिदं सर्वं यत् किञ्च जगत्यां जगत्।**

**तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्।।**

यस्य धनस्य प्राप्त्यर्थमस्माभिः पापकर्माणि क्रियन्ते तन्न कस्यापि जनस्य, ततु विनाशशीलम्। कल्याणमीप्सुभिः जनैः प्रार्थना क्रियते–

**आ नो भद्राः क्रतवो यन्तु विश्वतः।**

अर्थात् सर्वाभ्यः दिग्भ्यः कल्याणकराः विचारा आयान्तु।

तथा च– **विश्वानि देव सवितर्दुरितानि परासुव।**

**यद् भद्रं तन्न आसुव।** यजु. 30.3

अर्थात् हे सवितः। अस्माकं जीवने यानि–यानि दुरितानि पापानि सन्ति, तानि अपाकृत्य यद् भद्रं कल्याणकरं तत् प्रापय।

वेदमाता अमृतपुत्रान् अतीव प्रेम्णा उपदिशति–

**सहृदयं सामनस्यमविद्वेषं कृणोमि वः।**

**अन्योऽन्यमभिहर्यत वत्सं जातमिवाघ्न्या।।** अथर्व.3.30.1

****************************************************************************

आधुनिकयुगनिर्माता महर्षिः दयानन्दसरस्वती उपदिशति–

'वेदः सर्वासां सत्यविद्यानां पुस्तकं वर्त्तते। वेदस्य पठनं, पाठनं, श्रवणं, श्रावणं च समेषां मानवानां परमो धर्मः।'

वेदेषु ये आदर्शाः पदे–पदे प्रतिपादिताः यानि जीवनमूल्यानि निर्दिष्टानि, याः याः विद्याः प्रकाशिताः, तत् सर्वं त्रिकालसत्यं, प्रत्येकं युगे सर्वथा–सर्वथा विश्वकल्याणकरं वर्तते।

भगवती श्रुतिः प्रेरयति–

**उत्तिष्ठ ब्रह्मणस्पते देवान् यज्ञेन बोधय।**

**आयुः प्राणं प्रजां पशुं कीर्तिं यजमानं च वर्धय।।** अथर्व.19.6.31

मानवजीवनस्योद्देश्यं केवलं आहारनिद्राभयमैथुनमेव नास्ति। चरमोद्देश्यमस्ति–प्रभुप्राप्तिः, आनन्दावाप्तिः। श्रूयतां श्रुतिसन्देशः–

**इयं ते यज्ञिया तनूः।** यजु.4.13

अस्माभिः कदापि विपथगामिभिः नैव भाव्यम्। वैदिकाः ऋषयः निगदन्ति–

**मा प्रगाम पथो वयं मा यज्ञादिन्द्र सोमिनः।**

**मान्तः स्थुर्नो अरातयः।।** ऋग् 10.57.1

एवं वेदानां प्रासङ्गिकता यथा पुराकाले आसीत् तथैव वर्तमानकालेऽपि विद्यते।

यदा संसारोऽयं वेदानुकूलमाचरिष्यति तदैव अक्षय्यां कीर्तिं सुखं शान्तिं च प्राप्य अमृतत्वमपि अधिगमिष्यति इत्यत्र न मनागपि सन्देहावसरः। इममेव भावं मनसि निधाय ताभिः ताभिरनेकाभिः संस्थाभिः वेदवेदाङ्गविदाम् अन्ताराष्ट्रियसम्मेलनम् आयोज्यते।

**जयतु संस्कृतम्, जयतु वेदवाणी।**

**प्रो. महावीर**

एम.ए. (वेद,संस्कृत,हिन्दी) डी-लिट्

अध्यक्षः-संस्कृतविभागः, सङ्कायप्रमुख-प्राच्य विद्या संकायः,

गुरुकुलकांगड़ीविश्वविद्यालयः, हरिद्वार (उत्तरांचल)

उपाध्यक्षः-उत्तराखण्ड संस्कृत अकादमी



# संस्कृतविद्यानां सदापूर्णा खनिः मिथिला

**डॉ. उमारमण झा**

**मिथिला सर्वतः पुण्या सुराणामपि दुर्लभा।**
**अतस्तीर्थेषु सर्वेषु मिथिला पूज्यते सदा।।**

विदितमेव विदुषां समेषां यत् मिथिला वैदिककालादेव संस्कृतविद्यायाः मुख्यतमम्, अन्यतमं च प्रधानं केन्द्रमासीत्। अत्रैव ज्ञानोपार्जनाय सुदूरेभ्यः कुरु–पाञ्चालादिदेशेभ्यो ब्राह्मणाः जनक–याज्ञवल्क्यादीनां सकाशं समागतवन्त इति ब्राह्मणेषु उपनिषत्सु पुराणादिषु च बहुत्र प्रमाणरूपेण उल्लेखः समुपलभ्यते। मैत्रेयी–गार्गीप्रभृतयः तत्त्वजिज्ञासवः मैथिलराजस्य जनकस्य सभायां समागत्य समलङ्कृत्य च याज्ञवल्क्यादिभिः सह आध्यात्मिक–विषयालोचनमकुर्वन्निति नाविदितं विदुषाम्। इतिहासपुराणेष्वपि विशिष्ट–पण्डितमण्डल–मण्डित-मिथिला आसीदित्यपि स्पष्टमेव। अत्रैव बहवो वेदमन्त्रद्रष्टारः गौतमो रहूगणो वामदेवोऽन्ये च बभूवुः।

एवं भूते ज्ञानाग्निपवित्रीकृते उज्ज्वलीकृते च दिङ्मण्डले मिथिलामण्डले आचार्यानुशासनं समुपलभ्यापि तद्भाष्यव्याख्याने कथमप्यसमर्थः सुरेश्वराचार्य एव वाचस्पतिमिश्ररूपेण जन्मान्तरं गृहीत्वा पूर्वजन्मकृत–सङ्कल्पपूर्त्यै पुनरपि मिथिलायामेव जन्म लेभे इति च किंवदन्तीति किमत्र चित्रम्। प्रस्तुतनिबन्धे तस्याः मिथिलाया एव संकेतः प्रस्तूयते।

उदयनाचार्यः गंगेशोपाध्यायः, वर्धमानोपाध्यायः, पक्षधरमिश्रः, रुचिदत्तोपाध्यायः, श्रीधरठक्कुरः, भगीरथठक्कुरः, भवनाथमिश्रः (अयाचीमिश्रः), शंकरमिश्रः, सर्वतन्त्रस्वतन्त्रो धर्मदत्त (बच्चा) झा प्रभृतयः अनेके विद्वांसः मिथिलामेव जन्मना अलंकृत्य संस्कृतस्य अभिवृद्धिं चक्रुः। तत्रापि उदयनाचार्यस्य गर्वोक्तिः–

**वयमिह पदविद्यां तर्कमान्वीक्षिकीं वा**
**यदि पथि विपथे वा वर्तयामः स पन्थाः।**

**उदयति दिशि यस्यां भानुमान् सैव पूर्वा**

**नहि तरणिरुदीते दिक्पराधीनवृत्तिः।।**

एकदा उदयनाचार्येण ईश्वरं प्रति सगर्वमुक्तम्–

**ऐश्वर्य–मदमत्तोऽसि मामवज्ञाय वर्तसे।**

**समायाते पुनर्बौद्धे मदधीना तव स्थितिः।।**

श्रूयते यदस्य श्लोकस्य पठनानन्तरं सहसैव देवद्वारमुद्घाटितम्। उदयनाचार्यस्तु देवांश एव आसीत्।

**भगवानपि तत्रैव मिथिलायां जनार्दनः।**

**श्रीमानुदयनाचार्य–रूपेणाऽवततार ह।।**

**अद्यापि मिथिलायां तु पाठयन्ति गृहे गृहे।**

**विद्वांसः शास्त्रसंपन्नाः.........।।**

वाचस्पतिमिश्रः शंकरमिश्रश्च साक्षाद् देवस्वरूपौ एव। पक्षधरमिश्रस्तु पुनः ततोऽपि विशिष्ट इति केनापि उक्तम्–

**शंकर–वाचस्पत्योः शङ्कर–वाचस्पती सदृशौ।**

**पक्षधरप्रतिपक्षी लक्ष्यीभूतो न च क्वापि।।**

अस्यैव पक्षधरस्य सकाशं आगत्य प्रसिद्धनैयायिकाः वासुदेवसार्वभौमाः रघुनाथ-शिरोमणिप्रभृतयश्च नवद्वीपादागत्य न्यायशास्त्रमधीतवन्तः। श्रूयते यत् सदा रघुनाथशिरोमणिः (एकाक्षः) पक्षधरमिश्रसमीपं प्रथमत आगतवान् तदा पक्षधरेण प्रश्नः कृतः–

**आखण्डलः सहस्त्राक्षः विरूपाक्षस्त्रिलोचनः।**

**अन्ये द्विलोचनाः सर्वे को भवानेकलोचनः।।**

रघुनाथशिरोमणिना समुत्तरितम्–

**योऽन्धं करोत्यक्षिमन्तं यश्च बालं प्रबोधयेत्।**

**तमेवाध्यापकं मन्ये तदन्ये नामधारिणः।।**

वस्तुतोऽस्य म.म.पक्षधरमिश्रस्य नाम जयदेवमिश्र एव आसीत्। शास्त्रार्थे प्रबलपक्षधारणत्वात् पक्षधर इत्युपाधिना भूषितो विद्वद्भिः। अस्यैव जयदेवस्य प्रसन्नराघवाख्यं नाटकम्, चन्द्रालोकश्च प्रसिद्धौ ग्रन्थौ वर्तेते।

मैथिलपण्डितो भवनाथमिश्रः (पं.अयाचीति) शंकरमिश्रस्य पिता अतीव कर्मनिष्ठः प्रकाण्डपण्डितः शास्त्रज्ञमूर्धन्यश्च आसीत्। तेनैव स्वयमुक्तं वार्धक्यकाले–

**अधीतमध्यापितमर्जितं यशो न शोचनीयं किमपीह विद्यते।**
**अतः परं श्रीभवनाथशर्मणो मनो मनोहारिणि जाह्नवीतटे।।**

तस्यैवात्मजः म.म.शंकर मिश्रः बाल्यकाले एव राज्ञः सभायां स्वकीयं पाण्डित्यं प्रदर्शयन्नाह–

**बालोऽहं जगदानन्द न मे बाला सरस्वती।**
**अपूर्णे पञ्चमे वर्षे वर्णयामि जगत्त्रयम्।।**

महामहोपाध्यायो गंगेशोपाध्यायस्तु नव्यन्यायस्य पिता एव आसीत्। तेषां पाण्डित्यं तु पाश्चात्यैरपि स्वीक्रियते। तस्य 'तत्त्व–चिन्तामणि' ग्रन्थस्य आदिम एव मंगलश्लोकस्तस्य पाण्डित्यं सूचयति–

**अन्वीक्षानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतं**
**चिन्तादिव्य–विलोचनेन च तयोः सारं विलोक्याखिलम्।**
**तन्त्रे दोषगणेन दुर्गमतरे सिद्धान्त–दीक्षा–गुरु–**
**र्गंगेशस्तनुते मितेन वचसा श्रीतत्त्व–चिन्तामणिम्।।**

पुनश्च कथयति–

**यतो मणेः पण्डितमण्डनक्रिया प्रचण्ड–पाखण्ड-तमस्तिरस् क्रिया।**
**विपक्षपक्षेण विचारचातुरी न च स्वसिद्धान्तवचोदरिद्रता।।**

गंगेशोपाध्यायमहाभागैः न्यायशास्त्रे एका नूतना एव प्रणाली प्रचालिता यत्र अवच्छेदकता–प्रकारतादीनां बाहुल्यं वर्तते। यथा–'यत्र यत्र धूमस्तत्र वह्निरि'ति साहचर्यनियमो व्याप्तिः इत्यस्य कृते लिख्यते चिन्तामणिग्रन्थे–

**प्रतियोग्यसमानाधिकरण–यत्समानाधिकरणात्यन्ताभाव–प्रतियोगितावच्छेदका–ऽवच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः।**

पूर्वमीमांसाशास्त्रेऽपि जैमिनिः प्रभाकरमिश्रः मण्डनमिश्रः, शालिकनाथमिश्रः, वाचस्पतिमिश्रः, सुचरितमिश्रः, पार्थसारथिमिश्रः, परितोषमिश्रः अन्ये च बहवो मीमांसकपण्डिताः मिथिलायामभवन्। विद्यापतेः पुरुषपरीक्षायाः भूमिकायां उल्लेखो वर्तते यत् एकस्मिन् तडागयाग–समये 1400 मीमांसकाः समुपस्थिता आसन् यत्र पक्षधरमिश्रोऽपि स्वशिष्येन रघुनाथशिरोमणिना सह समागत आसीत्। मिथिलायाः वर्णने केनापि उक्तम्–

**जाता सा यत्र सीता सरिदमलजला वाग्वती यत्र पुण्या**

**यत्रास्ते सन्निधाने सुरनगरनदी भैरवीचेशलिंगम्।**

**मीमांसा–न्याय–वेदाध्ययनपटुतरैः पण्डितै–र्मण्डिता या।**

**भूदेवो यत्र भूपो ग्गजनवसुमती सास्ति मे तीरभुक्तिः।।**

अत एव नूनमेव 'मिथिला मीमांसा–न्याय–वेदाध्ययन–पटुतरैः मण्डिता' आसीत्। मिथिलायाः द्वादशनामसु ज्ञानपीठमपि एकं नाम वर्तते।

मीमांसकप्रवराणां मण्डनमिश्राणां नाम नाविदितं विदुषाम्। एतेषां सकाशं शास्त्रार्थं कर्तुं समागताः श्रीशङ्कराचार्या इत्यपि जनश्रुतिः प्रसिद्धा एव। यदा मण्डनमिश्रस्य ग्रामं प्रविश्य श्रीशंकराचार्येण 'मण्डनमिश्रस्य गृहं कुत्र वर्तते?' इति एका दासी पृष्ठा, तदा साऽब्रवीत्–

**स्वतः प्रमाणं परतः प्रमाणं कीरांगना यत्र गिरो गिरन्ति।**

**शिष्योपशिष्यैरुपगीयमानमवेहि तन्मण्डनमिश्रधाम।।**

श्रुत्वेदं शंकराचार्याः चकितचकिता अभवन्। श्रूयते यन्मण्डनमिश्रस्य शंकराचार्यस्य च शास्त्रार्थकाले मण्डनमिश्रस्य पत्नी भारती एव मध्यस्था आसीत्। शंकराचार्यस्तया भारतीदेव्या कामशास्त्रविषयके प्रश्ने पराजित इति।

मिथिलायाः विषये भवभूतेः श्लोकः स्मर्यते–

**पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां**

**विपर्यासो जातो घनविरलभावैः क्षितिरुहाम्।**

**बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं**

**निवेशः शैलानां तदिदमिति बुद्धिं जनयति।।**

मैथिलप्रवरस्य शालिकनाथमिश्रस्य पाण्डित्यमपि अद्वितीयमासीत्। ग्रन्थारम्भे एव स लिखति–

**स्वाध्यायविधिवाक्यार्थविचारे प्रयतामहे।**
**प्रभाकरगुरोर्दृष्ट्या मीमांसारम्भसिद्धये।।**

पार्थसारथिमिश्रोऽपि मीमांसाशास्त्रस्य अद्वितीयः पण्डितः। न्यायरत्नमालायां स लिखति–

**भुवनत्रयविख्यात–श्रीमज्ज्ञानात्मसूनुना।**
**तत एव श्रुतं प्राप्य विश्रुतः पार्थसारथिः।।**

शास्त्रदीपिकायां पुनः स एव लिखति–

**[illegible]यभासतमच्छन्नशास्त्रतत्त्वार्थदर्शिकाम्।**
**कुमारिलमतेनाहं करिष्ये शास्त्रदीपिकाम्।।**

सूत्रार्थसंग्रहे परितोषमित्रस्य अन्येषाञ्च उल्लेखो यथा–

**जैमिनि–शबर–कुमारिल–सुचरित–परितोष–पार्थसारथयः।**
**उम्बेक–विजयकारो मण्डन–वाचस्पती च विजयन्ताम्।।**

संस्कृतस्य काव्यसाहित्यक्षेत्रे गोवर्धनाचार्यः गोकुलनाथउपाध्यायः उमापतिः ज्योतिरीश्वरठक्कुरः, कविकोकिलविद्यापतिः, केशवमिश्रः भानुदत्तमिश्रः, मुरारिमिश्रः, गोविन्ददासः, गोविन्दठक्कुरः अन्ये च बहवो विद्वांसो मिथिलायां बभूवुः। आर्यासप्तशतीग्रन्थे उदयनाचार्यस्य गुरुः गोवर्धनाचार्यः मैथिलपण्डितस्य नीलाम्बरस्य विषये लिखति–

**यं गणयन्ति गुरोरनु यस्यास्ते धर्म–कर्म संकुचितम्।**
**कविमहमुशनसमिव तं तातं नीलाम्बरं वन्दे।।**

गोवर्धनाचार्यस्य भ्राता बलभद्राचार्यस्तु–

**उदयन–बलभद्राभ्यां सप्तशती शिष्यसोदराभ्यां मे।**
**द्यौरिव रविचन्द्राभ्यां प्रकाशितां निर्मलीकृत्य।।**

मिथिलायाः राज्यमपि पाण्डित्यबलेनैव प्राप्तम्–

**आसीत् पण्डितमण्डलाग्रगणितो भूमण्डलाखण्डलो**
**जातः खण्डबलाकुले गिरिसुताभक्तो महेशः कृती।**
**शाके रन्ध्रतुरंगमश्रुतिमही–संलक्षिते हायने**
**वाग्देवी–कृपया शुचेन मिथिलादेशः समस्तोऽर्जितः।।**

तस्यैव महेशठक्कुरस्य भ्राता भगीरथठक्कुरः विशतितमे एव वर्षे दुर्धर्षस्तार्किक आसीत्–

**विंशाब्दे–जयदेवपण्डितकवेस्तर्काब्धिपारंगतः।**
**श्रीमानेष भगीरथः समजनि श्रीचन्द्रपत्यात्मजः॥**
**श्रीधीरातनयेन तेन रचिता श्रीमन्महेशाग्रजः।**
**श्रीदामोदरपूर्वजेन जयतादाचन्द्रमेषा कृतिः॥**

मिथिलादेशे गार्गी–मैत्रेयि–सुलभा–सुनयना–भारती–लखिमा–चन्द्रकलाप्रभृतयः स्त्रीपण्डिता-श्चाप्यभवन्।

विंशतितमे खृष्टशताब्देऽपि म.म. डा. गंगानाथ झा–म.म.डा. जयदेव मिश्र–सर्वतन्त्रस्वतन्त्र–बच्चा झा–खुद्दी झा–दीनबन्धु झा–कविशेखरबदरीनाथ झा–डा. उमेश मिश्र–म.म.रामेश्वरझा प्रभृतयो बहवो विद्वांसः मिथिलादेशेऽभवन्।

एवमेव महामहोपाध्यायः कृष्णसिंहठाकुरः, महामहोपाध्यायः परमेश्वर झा, महामहोपाध्यायो राजेशमिश्रः, महावैयाकरणो मुक्तिनाथठाकुरः, नैयायिको विश्वनाथ झा, नैयायिको लोकनाथ झा, कइनाइ झा, वैयाकरणः खड्गनाथ झा, महावैयाकरणो लालजी झा, महामहोपाध्यायो मुरलीधर झा, महामहोपाध्यायः शशिनाथ झा, महामहोपाध्यायः चित्रधरमिश्रः, महावैयाकरणः चुम्मे झा, महामहोपाध्यायो दुःखमोचन झा, कविचन्द्रमणि झा, पण्डितप्रवरः त्रिलोचननाथमिश्रः, कविचन्द्रमणि झा, महावैयाकरणः शिवशंकर झा, अन्ये च शतशः शास्त्रमूर्धन्याः अस्मिन्नेव शताब्दे अभवन्। संक्षिप्तनिबन्धेऽस्मिस्तु स्थालीपुलाकन्यायेन केवलं मैथिलविदुषां दिग्दर्शनमेव कारितम्। किंबहुना–

**साद्या शक्तिर्विमलमिथिलाधाम्नि कङ्कालिकेति**
**ख्याता सीता जनकतनया सच्चिदानन्दरूपा।**
**शैवं चापं त्रिभुवनमदव्रातहृत्कं विधाय**
**पूर्णानन्दं दशरथसुतं रामचन्द्रं निनाय॥**

**डॉ. उमारमण झा**
राष्ट्रपतिसम्मानितो
लखनऊनगरम्



# वैदिकं स्वरविज्ञानम्

**डॉ. ब्रह्मचारी व्यासनन्दनः**

चतुसृषु वेदसंहितासु वैदिकस्वराणां विशिष्टं महत्त्वं विराजते। वैदिकमन्त्राणामुच्चारणक्रमे एतेषाम् उदात्तानुदात्तस्वरितस्वराणां वैज्ञानिकता अर्थपरिवर्त्तनदृष्ट्या अतिविशिष्टा। प्रातिशाख्येषु शिक्षाग्रन्थेषु च विशेषस्वरनियमानां विवेचनं प्राप्तं भवति इत्यस्मिन् प्रसङ्गे प्रातिशाख्यकाराणां शिक्षाकाराणाञ्च मतव्यतिरिक्तं वैयाकरणानां मतमप्युपलभ्यते। वैदिकभाषायाः स्वरविषयकनियमानां तेषाञ्च वैशिष्ट्यानां पूर्णरूपेण विवेचनं कृतं वैयाकरणैरपि। महाभाष्यकारेण भगवता पतञ्जलिना वैदिकस्वराणां व्याकरणस्य प्रयोजनसन्दर्भे वैज्ञानिकविश्लेषणं कुर्वता इत्थं भणितम्–

**दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।**

**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्।।** (महाभाष्ये पस्पशाह्निके)

अस्मिन् मन्त्रे महाभाष्कारेण शब्ददुष्टत्वं कतिविधं भवति इति प्रतिपाद्य तस्य किं दुष्फलमिति[1] प्रतिपादितम्। यस्मिन् मन्त्रे यः स्वरः साधुः तमुपेक्ष्य अनवधानतया स्वरान्तरस्य प्रयोगोऽपि शब्दसत्यत्वमेव। यथा–"इन्द्रशत्रुर्वर्धस्व" इत्यत्र शुद्धमन्तोदात्तं स्वरं विहाय आद्युदात्तः स्वरः ऋत्विग्भिः प्रयुक्तः। एवञ्च मन्त्रे शब्दसत्यत्व, संश्लेषात् यजमानस्य वृत्रस्य एव वधो जातः।

मन्त्रस्थपदानामर्थनिर्धारणे स्वराणां सम्यगुच्चारणमेवावश्यकं भवति। मन्त्रेषु स्वराणां स्थानपरिवर्त्तनद्वारा अर्थपरिवर्त्तनं जायते। स्वरेषु स्थानकारणत्वात् अस्य नामकरणं नित्यस्वरः समासे प्रकृतिस्वरो वा भवति। वैदिकवाङ्मयस्याधिकांशभागे गेयकारणत्वात् प्रयुक्तानाम् अच्-धर्मस्वराणां त्रिविधं स्वरूपं विद्यते तन्नाम त्रैस्वर्यम्। महर्षिणा पाणिनिना त्रैस्वर्यं प्रति त्रीणिसूत्राणि विरचितानि–उच्चैरुदात्तः (पा.सू.1.2.29), नीचैरनुदात्तः (पा.1.2.30), समाहारः स्वरितः (पा.1.2.31)। उदाहरणं यथा क्रमानुसारम् – अ, अ, अ।

एतेषां त्रयाणां स्वराणां परिचयो विधेयः सर्वप्रथमम्–

**उदात्तः—**उदात्तो हि उच्चस्वरः मन्यते। "उच्चैरुदात्तः" इति सूत्रेण उच्चस्वरेण उदात्तस्य उच्चारणं भवति तैत्तिरीयप्रातिशाख्यानुसारं गात्राणां दीर्घता, स्वरस्य कठिनता, कण्ठविवरस्य च संवृतता एव उदात्तस्योच्चारणकारणं भवति। दृश्यताम्–

**आयामो दारुण्यमणुता खस्येत्युच्चैः कराणि शब्दस्य।** (तै.प्रा. 22.9)

**अनुदात्तः—**अनुदात्तो हि निम्नस्वरः कथ्यते। "नीचैरनुदात्तः" इति सूत्रेण निम्नस्वरेणानुदात्तस्य उच्चारणं भवति। तैत्तिरीये प्रातिशाख्ये इत्यस्मिन् सन्दर्भे कथितमस्ति यत्–गात्राणां शिथिलता, मार्दवं स्वरस्य मृदुता स्निग्धता, उरुता खस्य महत्ता कण्ठस्येति नीचैः कराणि शब्दस्य। अपि च–

**अन्ववसर्गो मार्दवमुरुता खस्येति नीचैः कराणि।** (तै.प्रा. 22.10)

**स्वरितः—**स्वरितस्तु मध्यमः स्वरः मन्यते वैयाकरणैः। भगवता पाणिनिना "समाहारः स्वरितः" इतिसूत्रद्वारा अस्य विधानं कृतम्। अयं स्वतंत्रः स्वरो वा, अथवा उदात्तानुदात्तयोः समाहार एवाऽस्ति इत्यस्मिन् विषये बहुविवादाः वर्त्तन्ते। वस्तुतस्तु अयं स्वतंत्रः स्वरः इति निश्चप्रचम्। यथा त्रपुताम्रयोर्मध्ये संयोगकारणत्वात् कांस्यस्योत्पत्तिः जायते तथैव उदात्तानुदात्तयोः समाहारस्वरूपः अयं स्वरः निष्पन्नः परन्तु भिन्नः स्वरः भवति। अस्मिन् स्वरितस्वरे कति उदात्तांशः तथा च कति अनुदात्तांशः इत्युपरि प्रातिशाख्यकारैः शिक्षाकारैः वैयाकरणैश्च पर्याप्तं विवेचनं कृतम्।

स्वराणां परिचयक्रमे उव्वटकैय्यटवैंकटमाधवादीनाञ्च विचारः अतिव्यापकोऽस्ति।

आधुनिकवेदभाष्यकारेण महर्षिदयानन्दस्वामिना स्वरव्यवस्थाविषयः विचारितः। तेन भणितम्–

"अथ वेदार्थोपयोगितया संक्षेपतः स्वराणां व्यवस्था लिख्यते। ते स्वरा द्विधा, उदात्तषड्जादिभेदाः सप्त-सप्तैव सन्ति। तत्रोदात्तादीनां लक्षणानि व्याकरणमहाभाष्यकारपतञ्जलि प्रदर्शितानि लिख्यन्ते–

स्वयं राजन्त इति स्वराः। आयामो दारुण्यमणुता खस्येत्युच्चैः कराणि शब्दस्य। आयामो गात्राणां निग्रहः, दारुण्यं स्वरस्य दारुणता रुक्षता, अणुता कण्ठस्य संवृत्तता, **उच्चैः कराणि उदात्तविधायकानीति यावत् शब्दस्य।** अन्ववसर्गो मार्दवमुरुता खस्येति

नीचैः कराणि अनुदात्तविधायिकानीति यावत्–शब्दस्य। त्रैस्वर्य्येणाधीमहे, त्रिप्रकारैरज्भिरधीमहे, कैश्चिदुदात्तगुणैः, कैश्चिदनुदात्तगुणैः, कैश्चिदुभयगुणैः। तद्यथा–शुक्लगुणः शुक्लः, कृष्णगुणः कृष्णः, य इदानीमुभयगुणः स तृतीयामाख्यां लभते–कल्माष इति वा, सारङ्ग इति वा। एव-मिहापि उदात्त उदात्तगुणः, अनुदात्तोऽनुदात्तगुण,य इदानीमुभयगुणः स तृतीयामाख्यां लभते स्वरित इति। ते एते तन्त्रे तरनिर्देशे (अतिशयार्थबोधके तरप् प्रत्ययस्य निर्देशे) सप्त स्वराः भवन्ति। उदात्तः, उदात्ततरः, अनुदात्तः, अनुदात्ततरः, स्वरितः,स्वरिते यः उदात् सोऽन्येन विशिष्टः, एकश्रुतिः सप्तमः।'' 'उच्चैरुदात्त' इत्याद्युपरि।। (अ.11पा.2, 32)

(ऋग्वेदादिभाष्यभूमिका, पृ.385)

प्रातिशाख्येषु शिक्षाग्रन्थेषु च स्वरितस्य कतिपयभेदाः प्राप्नुवन्ति। ऋग्वेदप्रातिशाख्ये, कौहलि शिक्षायाम्, माण्डूकी शिक्षायाम्, नारदीय-शिक्षायां शैशिरीय-शिक्षायाञ्च स्वरितस्य सप्तभेदाः निर्दिष्टाः सन्ति। वाजसनेयिप्रातिशाख्ये याज्ञवल्क्य-शिक्षायाञ्च स्वरितस्य अष्टभेदाः प्राप्यन्ते अस्माभिः। तेषां नामानि सन्ति–(क) जात्यः (ख) प्रश्लिष्टः (ग) क्षैप्रः (घ) अभिनिहितः (ङ) तैरोव्यञ्जनम् (च) तैरोविरामकः (छ) पादवृत्तम् (ज) ताथाभाव्यः। तेषां स्वरितभेदानां संक्षेपतः परिचयः ईदृशो भवति–

**(क) जात्यस्वरितः**–स्वतन्त्रस्वरितान्तर्गते असन्धिजरूपे केवलं एकः स्वरितः तन्नाम जात्य–स्वरितः। जात्यस्वरितः अनुदात्तपूर्वः तिष्ठति। जात्यस्वरितस्य विशेषता भवति यत् यः स्वरः निश्चितरूपेण संयुक्तवर्णे एव भवति, यस्य परवर्त्तिवर्णः य् व् वा भवति।

यथा–कन्या क्व। पाणिनिना जात्य–स्वरितकृते 'तित्स्वरितम्' (पा.6.1.182) सूत्रम् विरचितम्।

**(ख) प्रश्लिष्टस्वरितः**–लौकिकसंस्कृते यः दीर्घसन्धिः वृद्धिसन्धिश्च कथ्येते तयोः प्रातिशाख्येषु शिक्षाग्रन्थेषु च 'प्रश्लिष्ट–स्वरितः' कथितमस्ति।

यथा– दिवि + इव = दिवीव ('ई' स्थाने)

स्रुचि + इव = स्रुचीव ('ई' स्थाने)

दिक्षु + उप = दिक्षूप ('ऊ' स्थाने)

**(ग) क्षैप्रस्वरितः**–लौकिकसंस्कृते यः यण्सन्धिः कथ्यते तं सन्धिं प्रातिशाख्येषु शिक्षाग्रन्थेषु च 'क्षैप्रस्वरितः' कथयन्ति।

यथा– त्रि + अम्बकम् = त्र्यम्बकम्

नु + इन्द्र = न्विद्रः

हि + अग्ने = ह्यग्ने

**(घ) अभिनिहितस्वरितः–**लौकिकसंस्कृते यः पूर्वरूपसन्धिः अस्ति, तं सन्धिं प्रातिशाख्येषु शिक्षाग्रन्थेषु च अभिनिहितस्वरितनाम्ना कथयन्ति।

यथा– ते + अवर्धन्त = तेऽवर्धन्त

सः + अब्रवीत् = सोऽब्रवीत्

ब्राह्मणः + अस्य = ब्राह्मणोऽस्य इत्यादयः।

ऋग्यजुरथर्वसंहितासु त्रैस्वर्यस्य एतत् रूपं मिलति। परन्तु सामवेदस्य गानसंहितायाम् अस्याभावः दृश्यते। अस्यां संहितायां सप्तस्वरपद्धतिः विद्यते। सामगाने प्रयुक्ते स्वरसप्तके ये स्वराः सन्ति तेषां नामानि–क्रुष्ट–प्रथम–द्वितीय–तृतीय–चतुर्थ–मद्र अतिस्वार्याश्च। अपरं नाम विद्यते शिक्षाग्रन्थे–षड्ज-ऋषभ-गान्धार–मध्यम–पञ्चम–धैवत–निषादाश्च। उदाहरणं यथा–

**अग्ने आ याहि वीतये गृणीना हव्यदातये।**

**नि होता सरिसे बर्हिषि॥** (साम. 1/11/11)

सामगानपरम्परायां क्रुष्ट्वादय एव सप्तस्वराः प्रचलिताः सन्ति। तत्र स्वराङ्कनप्रक्रिया एतादृशी भवति–एकतः सप्ताङ्काः (1,2,3,4,5,6,7) निर्दिष्टाः भवन्ति मन्त्राणामुपरि मन्त्रान् पदानि वा अन्तरा च। अवरोह 1,2,3,4,5 एते अङ्काः निर्दिश्यन्ते तथा च आरोहक्रमे 5,4,3,2,1 लिख्यन्ते। हस्तसञ्चालनमाध्यमेन वीणादिवाद्ययन्त्रद्वारा च पञ्च–सप्तस्वराणामर्थवैचित्र्यं वैज्ञानिकं रहस्यञ्च प्राप्येते। एको सामगानमन्त्रः द्रष्टव्यः–

काऽऽस्तवा। सत्यो3 मा उदानाम्। मा हिष्ठो। मात्सादन्ध। सा। सा। औ हो हाइ। दृढा। चिदा। रुजौहो 3। हुम्मा। वाऽ सो 325हायि।।

वेदरक्षार्यं प्रकृति-विकृतिपाठाः–संसारेऽस्मिन् सर्वेषु लौकिकग्रन्थेषु प्रक्षेपाः सञ्जाताः किन्तु वैदिकग्रन्थेषु चतुर्षु वेदेषु न कोपि प्रक्षेपो मिलति अस्य साक्षात्कारणमस्ति उदात्तादिभिः स्वरैः सह प्रकृतिविकृतिपाठाः प्रचलिताः सन्ति। वेदरक्षार्थम् एतादृशाः पाठाः प्रसिद्धाः सन्ति।

प्रकृतिपाठान्तर्गते त्रयः पाठाः विद्यन्ते–संहिता–पद–क्रमाः।

यथा– **अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम्।**

**होतारं रत्न–धातमम्।** (ऋग्वेद 1/1/1) इति संहितापाठः।

अग्निम्। ईडे। पुरोहितम्। यज्ञस्य। देवम्। ऋत्विजम्। होतारं। रत्नधातमम्–इति पदपाठः।।

अग्निम्। ईडे। ईडे अग्निम्। ईद्रे पुरोहितम् पुरोहितं यज्ञस्य। यज्ञस्य देवम्। देवम् ऋत्विजम्। ऋत्विजम् होतारं। होतारं ऋत्विजम्। होतारं रत्नधातमम् इति रत्नधातमम्। इति क्रमपाठः।

क्रमपाठे पञ्चभेदाः भवन्ति अनुक्रम–उत्क्रम–व्युत्क्रम–अभिक्रम–सक्रमाश्चेति।

विकृतिपाठाः – विकृतिपाठान्तर्गते अष्टौ पाठाः आयान्ति।

तेषां नामानि – जटा–माला–शिखा–रेखा–ध्वज–दण्ड–रथ–घनाश्च।

उक्तञ्च–

**जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः।**

**अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः।।** (अष्टवि।)

मन्त्रार्थरक्षार्थम् एतेषां पाठानां विशिष्टं महत्त्वं भवति।

विस्तारभयात् एतेषां पाठानामुदाहरणानि मया न प्रदत्तानि।।

## वेदार्थे स्वराणां महत्त्वम्

ध्वनिः वर्णानां प्रकृतिः। ध्वनेः द्वे रूपे स्तः–सामान्य–ध्वनिः तथा च विशिष्ट–ध्वनिः। सामान्यध्वनेः अर्थेन सह कोऽपि सम्बन्धो नाऽस्ति। विशिष्टो ध्वनिः एव ध्वनिः कथ्यते वेदार्थसन्दर्भे। वैदिकभाषायां सर्वेषाम् उदात्तानुदात्तस्वरितस्वराणां सम्बन्धः विशिष्टध्वनिना सह भवति।

वैदिकभाषायां प्रयुक्तेषु उदात्तादिषु स्वराघातः भवति परन्तु मन्त्रार्थक्रमे बलाघातः आयाति। ये स्वर–नियमाः सन्ति ते एव स्वराघातनियमाः। बलाघातस्य सम्बन्धः अर्थेन सह

अस्ति। 'इन्द्रशत्रुर्वर्धस्व' इति बलाघातकारणेन स्वरपरिवर्त्तनं सञ्जातम्, तस्मात् कारणात् अर्थोऽपि परिवर्त्तनं सगातः।

## स्वरद्वारा पदस्वरूपज्ञानम्

चत्वारि पदानि सन्ति–नामाख्यातोपसर्गनिपाताश्च। एतेषाम् चतुर्णाम् पदानां स्वरूपज्ञानक्रमे स्वरः निर्णायकः भवति। इत्यस्मिन् आचार्यस्य वेङ्कटमाधवस्य कथनं महत्त्वपूर्णमस्ति। तेन कथितम्–

**अन्धकारे दीपिकाभिर्गच्छन्न स्खलति क्वचित्।**

**एवं स्वरैः प्रणीतानां भवन्यर्थाः स्फुटा इति॥** (स्वरानु. 1.8.12)

वेङ्कटमाधवस्यं स्पष्टं मतमस्ति यत् नामाख्यातयोर्विभागः स्वरेणैव भवति। यथा–'किम्' शब्दस्य प्रथमैकवचने 'कः' इति पदं वर्तते। कृ धातोः लुङ्लकारे 'अकः' रूपं भवति। अटः अभावे 'कः' इति पदमवशिष्टम् अस्ति। इदं 'कः' इति रूपं सर्वनामरूमस्ति, कृ धातोः रूपमस्ति वा, अस्य निर्णयः वैदिकस्वरमाध्यमेनैव संभवति। यदि कः उदात्तयुक्तः भविष्यति तर्हि इदं सर्वनामपदं भविष्यति, यदि अनुदात्तो कः भविष्यति तर्हि इदं क्रियापदं रूपं भविष्यतीति।

(2) उदातः विभक्तेः स्वरूपस्यापि निर्णायकः भवति। एकाच् व्यञ्जनान्तप्रातिपदिकानां द्वितीयाबहुवचने तथा च पञ्चम्यां षष्ठ्यां च एकवचने समानानि रूपाणि भवन्ति।

यदि पदम् आद्युदात्तः भवेत् तर्हि तद् द्वितीयाबहुवचने भवति। एवञ्च उदात्तः प्रत्ययांशे विद्यते तर्हि तद्रूपं पञ्चम्यां षष्ठ्यां वा भविष्यति।

यथा – वाचः, वाचः।

(3) प्रथमायां सम्बोधने च रूपयोः साम्यं पदं भवति। उभयोर्विभागं स्वरः करोति।

यथा – जनासः – 'मनुष्य' – अन्तोदात्ते भूते सति।

जनासः – 'हे मनुष्याः' – आद्युदात्ते भूते सति।

(4) स्वरस्य लिङ्गनिर्धारणेऽपि स्वरः सहायको भवति। केचित् शब्दाः एतादृशाः सन्ति येषां पुल्लिङ्गे नपुंसके च समानानि रूपाणि प्रचलन्ति। एतेषां शब्दानां यत्पदम् आद्युदात्तः भवति तत्पदं नपुंसकं भवति। तथा च यत्पदं अन्तोदातः भवति तत्पदं पुल्लिङ्गं जायते।

यथा – रक्षः (नपु.), रक्षः (पु.)।

ब्रह्मन् (न.), ब्रह्मन् (पु.)।

एवमेव, यशस् (न.) कीर्तिः यशस् (पु.) – यशस्वी।

अपस् (न.) (कार्यम्), अपस् (पु.)

(5) समासपदानां निर्धारणाय स्वराणां सर्वाधिका उपयोगिता।

यथा – इन्द्रशत्रुः – अन्तोदात्तः विद्यते – तत्पुरुषसमासः।

इन्द्रशत्रुः – आद्युदात्तः विद्यते – बहुब्रीहिसमासः।

एवं प्रकारेण सिद्धं भवति यत् स्वरपरिवर्त्तनद्वाराऽपि मन्त्रार्थपरिवर्त्तनं करोति याज्ञिकः ऋत्विक्।

इत्यस्मिन् सन्दर्भे भगवता पतञ्जलिना 'स्थूलपृषती' इति पदमुधृत्य एतत् रहस्यं प्रतिपादितम्। यज्ञप्रकरणे कर्मकाण्डे एकं वाक्यमायाति–

**''स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत''**

अस्मिन् विषये संदेहः भवति। 'स्थूलपृषती' इत्यस्य पदस्य विग्रहः जायते – स्थूला चासौ पृषती – कर्मधारय तत्पुरुंषसमासे स्थूलानि पृषन्ति यस्याः सा – बहुब्रीहिसमासे वा सुष्ठु प्रयोगः भविष्यति, अस्य निर्धारणं केवलं स्वरमाध्यमेनैव संभवति।

एवञ्च पदार्थ-निर्णये वाक्यार्थनिर्णये च स्वराणाम् उपयोगिता स्पष्टीभूता भवति। अतस्तु उदात्तषड्जादीनां वैदिकस्वराणां मन्त्रार्थरक्षार्थं मन्त्रार्थबोधार्थसन्दर्भे च महती विशेषता परिलक्ष्यते इत्यस्मिन् विषये नास्त्यत्र कश्चिद् विसंवादः।

**॥ शमित्योम् ॥**

**डॉ. ब्रह्मचारी व्यासनन्दनः**
वरीयः प्राध्यापकः, संस्कृतविभागः
रामेश्वर महाविद्यालयः,
मुजफ्फरपुरम्



# आधुनिकसंस्कृतकवितायां समसामयिकं जीवनवर्णनम्

डॉ. लालाशंकर गयावालः

आधुनिकं संस्कृतवाङ्मयं परमललितं सुविशालञ्च। एतस्य पारम्परिकीधाराः समग्रे विश्वे प्रवहमाणाः दरीदृश्यन्ते। एतस्यामेव परम्परायामेका परम्परा वर्तते समसामयिक-कविता-परम्परा। समसामयिकं नाम समसामयिकं जीवनवर्णनम्। तत्र दैनन्दिन-घटनासु घटितं वृत्तमाधारीकृत्य कवेः भावोद्रेकात् प्रस्फुटितानां रचनानां चित्रणं समसामयिकं वर्णनम्। स्वातंत्र्योत्तरभारते आधुनिकाः कवयः न केवलं पारम्परिकीं पद्धतिमनुसृत्य दृश्यश्रव्यानुगतरचनानां रचनां कुर्वन्त्यपितु एतेषां वर्तत एकं समसामयिकमपि जीवनवर्णनं यस्मिन् समसामयिकपरिस्थितीः वर्णयितुं विविधप्रकारान् प्रस्तोतुं स्वमनोगतान् भावान् प्रकटयितुं निरन्तरमुद्विग्नाः वर्तन्ते। यत्र दरीदृश्यन्ते ते ते भावाः ताः ताः घटनाप्रभृतयः तानि तानि समस्यारूपाणि काव्यानि। तेषु कविषु केचन प्रमुखाः वर्तन्ते–डा. रामकरणशर्मा, डा. रेवाप्रसादद्विवेदि, बच्चूलाल अवस्थी, अमीरचन्द शास्त्री, कमलेशदत्तत्रिपाठी, राजेन्द्रमिश्र, श्रीनिवासरथ, राधावल्लभ त्रिपाठी, रमाकान्त शुक्ल, हनिश्चन्द्ररेणा पुरकर, केशवचन्द्र दास, हर्षदेवमाधव, हरिराम आचार्य, प्यारेमोहन शर्मा, मोहनलाल शर्मा अन्ये चैतत् प्रभृतयः।

डा. राधावल्लभः लिखति कालेन चलन्त अस्माकं कवयः समसामयिकभावबोधं प्रति सचेतसः जाताः सन्ति। एते एकत्र प्राचीनपरम्पराभिः स्वसम्बन्धं योजितवन्तः सन्ति, अन्यत्र राष्ट्रस्य परिवर्तनक्षणायापि स्वं स्वरं प्रदत्तवन्तः सन्ति। स्वतंत्रतान्दोलनात् प्रागपि जायमानानां घटनानामुपरि संस्कृतस्य प्राक्तनकविभिः ये भावाः कवितारूपेण प्रदर्शिताः ते तस्य कवेः जीवनदर्शनमेव भवतु नाम तत्र स्वतंत्रतासंग्रामस्य 'कुरु वा मर' असहयोगान्दोलनं, चौरा-चौरी काण्डम् अन्यत् वा।

समकालीनसमाजस्य प्रतिघटनयाऽत्मसाद् भूत्वा आत्मसंवेदनया तस्यै घटनायै यथार्थशब्दं प्रददाति कवितारूपेण। अतएव स्वातंत्र्योत्तरभारते पाकिस्तानबंगलादेशयोर्युद्धसमये, खाड़ीयुद्धसमये, इमरजेंसीसमये आतङ्कवाद कश्मीर समस्या–कारगिलयुद्ध–मुम्बईकाण्ड–हवाला–पोखरण–भूकम्प–

झञ्झावात–अमेरिकायामातङ्कवादाक्रमण–भारतीयसंसदुपर्यातङ्कवादाक्रमणादि नूतनविषयेष्वपि संस्कृतकविभिः कविताः लिखिताः। वितगदशकद्वये संस्कृतकविभिः समसामयिकघटनानां गूढ़संवेदन शीलतायाआधारे, अनुभवप्रामाणिकतायाआधारे यथार्थानुभूतेराधारे कविताः रचिताः। एकस्याः घटनायाः स्थितेश्च वर्णनं भिन्न–भिन्नप्रकारेण कविभिः कृतम्। निश्चयमेव तेषामन्तर्दृष्टिः भिन्न–भिन्नतत्त्वानामीक्षणं करोति।

संसद्भवनोपर्यातङ्कवादाक्रमणविषये श्रीहरिश्चन्द्रेणपुरकरेण लिखितं यत् अमेरिकायामुपर्या-क्रमणेन कुपितः बुशः शीघ्रमेव तालिबानं प्रत्याक्रमणं कृतवान्। अस्माकं सर्वोच्चसंस्था वदति संसदोपर्यातङ्कवादाक्रमणे जाते वयं संयमस्य पाठं पाठयामः। तेन लिखितम्–

**एकेनैव महाक्रमेण कुपितैः श्रीमद्बुशैः सत्वरं**
**तालीबानकुशासनोपरि महाघोराक्रमोऽनुष्ठितः।**
**अस्माकं दशकद्वये तु निहिताः षष्टिः सहस्रजनाः**
**संसच्च प्रहृता तथापि नितरां तैर्बोध्यते संयमः।।**
**उच्चै राष्ट्रियमानबिन्दुकथिते संसत्सभामन्दिरे**
**ह्याक्रान्तेऽपि महोग्रवादिकितवैर्यैः संयमो बोध्यते।**
**पाकस्तैः प्रथमं हि संयमकृते सम्बोधनीयः सुहृद्**
**अस्मत्संयम एव पूरित इति प्रोक्तं महामन्त्रिभिः।।[1]**

डा. रेवाप्रसादद्विवेदिनः 'विधेर्होमोनिषेधानले' तथा मधुसूदनपेन्नामहोदयस्य 'नरमेधः कविताद्वयं।। सितम्बर 2001 तमवर्षे अमेरिकायामुपरिकृतस्यातङ्कवादाक्रमणस्य जीवन्ती शाश्वता चाभिव्यक्तिर्वर्तते। एतादृशाः कविताः समसामयिक-घटनाक्रमधारायां प्रवाहिताः समसामयिक-कविताः कवेः जीवनदर्शनं प्रस्तौति। तत्र श्रीद्विवेदिना लिख्यते–

**यद् वै मानवहातनोपनगरे पुंजातिकीर्तिध्वज–**
**प्रख्यातं व्यवसायकेन्द्रभवनद्वन्द्वं कृतं भस्मसात्।**
**अस्यार्थः खलु कः, स एष सुमहान् निर्माणकाये विना**
**शस्याघात उतास्ति कश्चन विधेर्होमो निषेधानले।।[2]**

मधुसूदनपेन्नामहोदयेन 'नरमेधः' कवितायां लिखितम्–

**सेप्तेबर्मास–पूर्वार्धे दिने चैकादशे तथा।**

**मानवनव्यविध्वंसे, नरमेधोऽभवन्नवः।।**[3]

कलिङ्गप्रान्ते प्रकृत्याः प्रचण्डोद्दामप्रकोपेन प्रकम्पिताः न केवलं तत्रस्थाः एव निवसन्तः जनाः, अपितु अनया विभीषिकया दूरप्रदेशविराजमानानामपि दंदह्यते चेतः। एकत्र श्रीहरिश्चन्द्ररेणापुरकरेण यत्र भीषणझंझावातैः छिन्नभिन्नानां सामाजिकानां मार्मिकं यथार्थञ्च चित्रणम् 'अहो दौर्भाग्यमुत्कलानाम्'[4] कवितायां कृतं तथैव सुन्दरराजेण 'भयानकं यत् भुवनेश्वरेऽभूत्'[5] कवितायामुत्कलराजधान्याः भयानकं चित्रणं चित्रितम्। बिहारप्रदेशवास्तव्येन शशिनाथ झा महोदयेनापि 'कलिङ्ग महावात' तथा 'प्रकम्पनः' कवितयोर्माध्यमेन कलिङ्गमहावात-प्रकम्पनस्य सजीवं मार्मिकं च वर्णनं विहितम्। श्रीझामहोदयेन लिखितम्–

**महावातचक्रेषु बुद्धिर्हता हा**

**महाभूतसंक्षोभसम्पद्गता हा।**

**तदैवागता हन्त झञ्झा कराला**

**विपत्तौ विपच्चैव हा हा विशाला।।**[6]

समसामयिकमर्मचित्रणे सुपटुः कविः बनमाली विस्वालः कलिङ्गप्रदेशवास्तव्यः। एतेन कलिङ्गप्रदेशेन घटितातिचक्रवातघटनया दुर्घटितानां वृत्तानां तैराक्रान्तमानवानां दुर्दशायाः असह्यपीडायाः आत्मसाक्षात्कारम् एव कुर्वन् स्वानुभूतिमिव वर्णयति–

**न कुत्रचिल्लता नाथवा पादपः**

**जलमग्ना धरा आविर्भूत अष्टमः समुद्रः**

**यत्र राजा तत्रापि दरिद्रः**

**जीवितानां कंगलानाम् आकाशेऽस्ति दृष्टिः**

**विमानेभ्यो भविष्यति कदा खाद्यवृष्टिः।।**[7]

एतेषां कवीनां जीवनं दर्शनं न केवलं स्वान्तः सुखाय अपितु अन्येऽपि सुखिनः भवेयुः तदर्थमेव भूतभावनं पतितपावनं परमेश्वरं प्रार्थयन्ते उत्कलवासिनः कल्याणाय रक्षणाय मङ्गलाय च–

**हे भूतभावनविभो भवतापहारिन्**

**संसार-रंगनटनाटन सूत्रधार।**

**सर्वस्व लुप्तपरितप्त-हतोत्कलीयान्**

**संरक्ष तारय कृपां कुरु देवदेव॥[8]**

**अहोमङ्गलं सङ्गतं तत्र भूयात्**

**सहा सज्जनानां गतिस्तत्र यायात्।**

**सदाशारतानां सदा सारवत्त्वं**

**कलिङ्ग–प्रजानां 'सदाशा–रवत्वम्॥[9]**

जगतः समग्रचेतनया चिन्तितोऽस्माकं कविः प्रतिपलघटितघटनाभिः एकक्षणमपि स्वं विलगं न करोति अत्र एतेषां कवीनां जीवनवर्णनं समसामयिकघटनासु सम्पृक्तम् इव प्रतिभाति। "कारगिलविजयो"परि "अर्वाचीनसंस्कृतम्"[10] तथा 'दूर्वा' पत्रिकायाः "कारगिल विशेषाङ्कः" कारगिलसमरे वीरगतिप्राप्तानां सैनिकानां श्रद्धाञ्जलिरूपेण समर्पितः। यस्मिन् सैनिकान् प्रति तेषां मानवदर्शनमेव प्रकटीभवति। नैकैः कविभिः कारगिलविजयोत्सवे स्वकीया भावना प्रकटिताः तत्राभिराजराजेन्द्रमिश्र, रमाकान्त शुक्ल, हरिश्चन्द्ररेणापुरकर, मोहनलाल पाण्डेय, नरोत्तम चतुर्वेदि, प्यारेमोहन शर्मा, शशिनाथ झा, रवीन्द्र कु.पण्डा, बनमाली बिस्वाल प्रभृतीनां कवीनां राष्ट्रस्य रक्षार्थं स्वं सर्वस्वं समर्पिवतः सैनिकान् प्रति तेषामभिव्यक्तयः दृश्यन्ते। कारगिलविजयानन्दस्याभिव्यक्तिः मुखरितः डा. रमाकान्तशुक्लेन "प्रणम्याः कारगीलवीराः" इति कवितायाम् अमुं विजयं कविना "भारतस्य विजयोऽयम्" इति उद्घोषितम्–

**जयन्त्येतेऽस्मदीया गौरवांकाः कारगिलवीराः।**

**समर्च्या आसतेऽस्माकं प्रणम्याः कारगिलवीराः॥[11]**

**क्रुद्धं हिंसा बलं जितं किल सत्याहिंसा बलतः।**

**आंग्लशासनखलूच्चारितं भारतस्य विजयोऽयम्॥[12]**

"अन्तिमः प्रमाणः" इति कवितायां युद्धे हतानां सैनिकपरिवाराणां मर्मवेदना अतीव

कारुणिककविदृष्ट्या उपस्थापिता श्रीबनमालिविस्वालेन–

**सैनिकैः वरयात्रिभिः वरः समागतः।**

**शवयात्रायान्तु समागतं शवं कारगिलतः॥[13]**

गुर्जरप्रदेशे भूकम्पवर्णने श्रीरामदवे महोदयस्य 'अहो गुर्जरभूमिकम्पैः प्रणाशः कवितायां गुर्जरप्रान्तस्य विभीषिकायाः मार्मिकं संवेदनापूर्णं च चित्रणं प्रस्तुतं यत्र सर्वत्र हाहाकारं कुर्वन्तः विलपन्तः करुणंक्रन्दन्तः जनाः कथं? अत्र कवेरभिव्यक्तिर्वर्तते–

**वृद्धाः रुदन्ति सुतमृत्यु-विषाद-विद्धाः।**

**वामा रुदन्ति निजभर्तृवियोगखिन्नाः।**

**क्रन्दन्ति चात्र शिशवो जननीवियुक्ता**

**हा हाभितो विलपनं परिलक्ष्यतेऽत्र॥**

**हे द्वारिकेश! कृतगुर्जरदेशवास!**

**करुणार्णवस्य करुणा कथमस्तमेता।**

**नोदेति येन परितो परिवीक्ष्य नाशम्**

**आक्रन्दनञ्च करुणाजनकं जनानाम्॥[14]**

शिवसागरत्रिपाठिनः[15] नारायणशास्त्रिकाङ्करस्य च रचना "परमाणुपरीक्षणम्" कवितायां भारतेन पोखरणक्षेत्रे कृतस्य परमाणुपरीक्षणस्य औचित्यम् आवश्यकतां च प्रदर्शयति। श्री काङ्कर वाजपेयीमुखेस्योपयोगित्वं भणति–

**शान्तिविकासकार्येषु स्वसुरक्षोपकरण निर्माण एव।**

**उपयोगोऽस्य करिष्यत इति चाप्युद्घोष्य साधुकृतम्॥[16]**

श्री मोहनलालपाण्डेयेन 'कश्मीरो भारताङ्गम्' तथा 'वाजपेयी–मुशर्रफ शिखरवार्ता' नाम्ना कविते लिखिते। शिखरवार्ताविषये तेन लिखितम्–

**कविरटलबिहारी वाजपेयी प्रमन्त्री**

**रुचिरशिखरवार्तां भागरायां विधातुं।**

**जनरलपरेवज पाकराष्ट्रस्य नाथं**

**सचिव समिति युक्तः प्राहण्यच्छान्तिसिद्धयै॥[17]**

राधकृष्णशास्त्रि 'पाकमुद्दिश्य' कवितायां पाकिस्तानेन कुनीतिमनुसृत्य कश्मीरं प्राप्तुमिष्यते परं राष्ट्ररक्षातत्परैः भारतीयसैनिकैः सर्व प्रयासाः विफलीकृताः। स्वं सर्वस्वं समर्पितान् वसुधागौरववर्धकान् वीरान् प्रति श्रद्धांजलिमर्पयन् कविः लिखति–

**विधाय सर्वस्व-समर्पणं मुदा**

**रक्षन्ति ये मातृभुवं हि ते भटाः।**

**धान्यैर्धनैश्चापि तथाविधा जनाः**

**पाकप्रणाशाय जयन्तु सन्ततम्॥[18]**

इत्थं स्वातन्त्र्योत्तरभारते समसामयिक-संस्कृतकवितासु कवेः जीवनवर्णनं पश्यामः। एथा समसामयिककविता हर्षदेवमाधवेन 'प्रयोगशील नई कविता' उक्ता। रवीन्द्रकुमारपण्डामहोदयो नूतनप्रयोगं अन्यभाषासाहित्येन प्रभावितं स्वीकुरुते।[19] निश्चयमेव कवेः सद्यः प्रसूतवेदनामयं समसामयिकं जीवनवर्णनं स्वीकरणीयम् इति। सहृदयपाठकानामावश्यकता वर्तते ये स्वनवनवोन्मेषशालिप्रज्ञया एतेषामास्वादनं कुर्युः।

## सन्दर्भ-ग्रन्थाः


1. अर्वाचीनसंस्कृतम् - 241
2. तत्रैव - 24.1
3. तत्रैव - 24.1
4. तत्रैव - 22.1
5. तत्रैव - 22.1
6. तत्रैव - 22.1

7. दृक् - अंक-3
8. तत्रैव - 22.1
9. तत्रैव - 22.1
10. तत्रैव - कारगिलविशेषङ्कः - 21.3
11. तत्रैव - 22.3
12. तत्रैव - 22.3
13. ऋतुपर्णा, पृ.147
14. भारती - 51.6
15. स्वरमङ्गला - 23.1.3
16. तत्रैव - 24.3
17. भारती - 51.11
18. स्वरमंगला - 24.3
19. दृक् अङ्क - 5, पृ.52



**डॉ. लाल शंकर गयावालः**
संस्कृतविभागाध्यक्षः
कामेश्वरी देवीराजकीकन्यामहाविद्यालयः
भरतपुरम् (राजस्थान)




# अष्टाध्यायीस्थसूत्राणां वर्गीकरणम्

**डॉ. सुरेश्वर झा**

संस्कृतवाङ्मये सत्स्वपि श्रौतसूत्र–गृह्यसूत्र–न्यायसूत्र–मीमांसासूत्राद्यनेकसूत्रेषु व्याकरणसूत्रस्य महत्त्वं सर्वातिशायि वर्तते, सर्वशास्त्रोपकारकत्वात्। तथा ह्युक्तम्–

**यो वेद वेदवदनं सदनं हि सम्यग्**

**ब्राह्मयाः स वेदमपि वेद किमन्यशास्त्रम्।**

**यस्मादतः प्रथममेतदधीत्य धीमान्**

**शास्त्रान्तरस्य भवति श्रवणेऽधिकारी।।**

यद्यपि–

**इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।**

**पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः।।**

**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।**

**सारस्वतं चापिशलं शाकलं पाणिनीयकम्।**

इत्यादिप्रसिद्धश्लोकानुसारेण नैकानि व्याकरणानीति श्रूयते। तथापि–

सम्प्रत्युपलभ्यमानेषु व्याकरणेषु महर्षिपाणिनिना विरचितम् अष्टाध्यायी, पाणिनीयाष्टकम्, पाणिनीयशब्दानुशासनम् इत्याद्यनेकनामभिर्विश्रुतं पाणिनीयव्याकरणमेव सर्वतः प्राचीनं लौकिक–वैदिकोभयशब्दान्वाख्यायकं विद्वद्भिः स्वीकृतम्, अध्ययनेऽध्यापने च प्रचलितमस्ति।। पाणिनीयव्याकरणं पञ्चाङ्गमस्ति।। अस्य च पञ्चाङ्गानि निम्नलिखितानि सन्ति–

1. सूत्रपाठः 2. धातुपाठः 3. गणपाठः 4. उणादिपाठः 5. लिङ्गानुशासनं च।

पाणिनीयव्याकरणस्य पूर्णता, रहस्यज्ञानं च कात्यायनकृतवार्तिकेन, पतञ्जलिकृतमहाभाष्येण च भवतीति पाणिनीयव्याकरणं "त्रिमुनि व्याकरणम्" इत्यपि कथ्यते।

पाणिनीयव्याकरणे सत्स्वप्यनेकाङ्गेषु तत्र सूत्रपाठः सर्वप्रधानो विद्यते, अङ्गान्तराणां तदर्थत्वात्। वार्तिकस्य, महाभाष्यस्य चाऽऽधारः सूत्रपाठ एव। सूत्रपाठे सूत्राणां संख्याविषये विवादे सत्यपि एतत् कथयितुं शक्यते यत् पाणिनीयाष्टके सूत्राणां संख्या चतुःसहस्रात् किञ्चिन्न्यूना वर्तते।

एतेषां सूत्राणां व्याख्याकारैः षट्, सप्त वा वर्गाः कृताः सन्ति। एषां पाणिनीयाष्टकसूत्राणां वर्गीकरणविषये निम्नलिखितः श्लोकोऽतीव प्रसिद्धोऽस्ति–

**संज्ञा च पारेभाषा च विधिर्नियम एव च।**

**अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥**

इति श्लोकानुसारेण सूत्राणां निम्नलिखिताः षड् वर्गा भवन्ति–

1. संज्ञासूत्राणि 2. परिभाषासूत्राणि 3. विधिसूत्राणि 4. नियमसूत्राणि 5. अतिदेशसूत्राणि 6. अधिकारसूत्राणि चेति। उपर्युक्त एव श्लोकः किंचित्पाठान्तरेण एवमपि पठितो दृश्यते–

**संज्ञा च परिभाषा च विधिर्नियम एव च।**

**अतिदेशोऽधिकारश्च निषेधः सूत्रसप्तकम्॥**

उपर्युक्त- श्लोकानुसारेण पाणिनीयसूत्राणामेकः सप्तमोऽपि वर्गो निष्पद्यते, यस्मिन् वर्गे निषेधसूत्राणि आयान्ति।

निषेधसूत्राणामपि एकः पृथग्वर्गः इति नागेशोऽपि स्वीकरोति। अत एव परिभाषेन्दुशेखरस्य यथोद्देशपरिभाषाया व्याख्यानक्रमे तेन स्पष्टीकृतं यद् भाष्यकारेण 'क्ङिति च' (1.1.5) इति निषेधसूत्रविषयेऽपि 'कार्यकालं संज्ञापरिभाषम्' इति परिभाषायाः सञ्चारः कृतस्तद् निषेधसूत्रे परिभाषासादृश्येन परिभाषात्वाऽऽरोपात्। तथा ह्युक्तं तत्र नागेशेन–'निषेधवाक्यानामपि निषेध्यविशेषा-काङ्क्षतत्वाद्विध्येकवाक्यतयैवान्वय इति परिभाषासादृश्यात् परिभाषात्वेन व्यवहारः 'क्ङिति च' 1.1.5 इति सूत्रे भाष्ये।" इति।

यथोद्देश–कार्यकालेतिपक्षद्वयस्य संज्ञा–परिभाषामात्रविषयकत्वेऽपि 'क्ङिति च' (1.1.5)

इत्यत्र भाष्ये कार्यकालपक्षोपन्यासेन निषेधवाक्येष्वपि परिभाषात्वमारोप्यते इति नागेशस्याशयः।

एवं हि 'क्ङिति च' (1.1.5) इत्यत्रत्यं भाष्यम्– "अथवा–कार्यकालं संज्ञापरिभाषम्। यत्र कार्यं तत्र द्रष्टव्यम्, पुगन्तलघूपधस्य गुणो भवति' इत्युपस्थितमिदं भवति 'क्ङिति न' इति।

प. दीनबन्धुझाविरचिते पाणिनीयव्याकरणतत्त्वप्रदीपेऽपि प्रतिषेधस्य एको वर्गः स्वीकृतोऽस्ति। तत्रोद्धृतः श्लोको निम्नलिखितो विद्यते–

**संज्ञा च परिभाषा च विधिर्नियम एव च।**

**प्रतिषेधोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥**

श्लोकेऽस्मिन् यद्यपि अतिदेशस्य स्थाने प्रतिषेधस्य पाठो दृश्यते, तथापि अत्रापि स्पष्टमेव यत् प्रतिषेधस्यापि एको वर्गः स्वीक्रियते आचार्यैः।

अतः सूत्राणां सप्त वर्गाः स्वीकार्याः। यद्यपि सूत्राणां प्रकारान्तरेणापि वर्गीकरणं कर्तुं शक्यते। तद्यथा–

1. सामान्यसूत्राणि 2. विशेषसूत्राणि च।

तथा हि पस्पशाह्निके भाष्येऽप्युक्तं– 'कथं तर्हीमे शब्दाः प्रतिपत्तव्याः? किञ्चित्सामान्य-विशेषवल्लक्षणं प्रवर्त्यम्। येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्। किं पुनस्तत्? उत्सर्गापवादौ। कश्चिदुत्सर्गः कर्त्तव्यः, कश्चिदपवादः' इति।

पुनश्च लौकिकवैदिकशब्दसिद्धि–दृष्ट्यापि पाणिनीयाष्टकसूत्राणां वर्गीकरणं कर्तुं शक्यते। एतदनुसारेण सूत्राणां निम्नलिखिता वर्गा भविष्यन्ति–

1. लौकिकशब्दसाधकानि सूत्राणि
2. वैदिकशब्दसाधकानि सूत्राणि
3. लौकिकवैदिकोभयविधशब्दसाधकानि सूत्राणि चेति।

लौकिकशब्दसाधकानि सूत्राणि पृथक्कृत्य आचार्यपुरुषोत्तमदेवेन 'भाषावृत्तिः' नामको ग्रन्थः प्रणीतः। वैदिकशब्दसाधकानि सूत्राणि पृथक्कृत्य भट्टोजिदीक्षितेन वैयाकरणसिद्धान्तकौमुद्याः स्वरवैदिकीप्रक्रियाभागः विरचितः। वैयाकरणसिद्धान्तकौमुद्या एव स्वरवैदिकीभागतोऽवशिष्टा

अधिकतरभागाः लौकिकवैदिकोभयविधशब्दसाधकानां सूत्राणां व्याख्यानात्मकाः सन्त्येव।

एवं हि विविधप्रकारेण सूत्राणां वर्गीकरणं सम्भवति तथापि 'संज्ञा च परिभाषा च' इति प्रसिद्ध–श्लोकानुसारेणैव पाणिनीयसूत्राणां वर्गीकरणं प्रमुखतया गृह्यते। अत एव लघुशब्देन्दुशेखरे नागेशेन 'अइउण्' इत्यादि माहेश्वरसूत्राणां कस्मिन् वर्गे समावेश इति जिज्ञासायाः समाधानाय उक्तम्– 'एषां क्रमबोधकत्वेऽप्यादिरन्त्येनेत्यनेनैकवाक्यतया वृत्तिपरिच्छेदकत्वेन संज्ञासूत्रत्वम्' इति।

एवमेव म.म. पण्डितराज डॉ. श्रीगोपालशास्त्री 'दर्शनकेशरी' महाभागेनाऽपि ऋजुपाणिनीयम्' इति ग्रन्थस्य प्रस्तावनायां 'सूत्रों के प्रकारभेद' इति शीर्षके निबन्धे संज्ञादिवर्गा एव आदृताः। अतोऽत्रापि पाणिनीयाष्टकसूत्राणां निषेधवर्गेण सह सप्तवर्गान् स्वीकृत्य तेषां संक्षेपेण विवरणमिह प्रस्तूयते। निषेधवर्गेण सह सूत्राणां निम्नलिखिता सप्त वर्गा भवन्ति–

1. संज्ञासूत्रम् 2. परिभाषासूत्रम् 3. विधिसूत्रम् 4. नियमसूत्रम् 5. अतिदेशसूत्रम् 6. निषेधसूत्रम् 7. अधिकारसूत्रम् चेति।

एषां संक्षेपेण विवरणम्

**1. संज्ञासूत्रम् –** 'वृद्धिरेचि' (6.1.88) आद् गुणः (6.1.87) इत्यादिसूत्रेषु प्रयुक्तैः वृद्ध्यादिशब्दैः येषां बोधो येन सूत्रेण भवति, तत्संज्ञासूत्रम्। तथा चोच्यते–शक्तिनियामकत्वं संज्ञासूत्रत्वम्। यथा 'वृद्धिरादैच्' (1.1.1) इति सूत्रेण बोधो भवति यद् आकारः, ऐकारः, औकारश्च वृद्धिसंज्ञका भवन्ति, अतः 'वृद्धिरादैच्' (1.1.1) इति संज्ञासूत्रमुच्यते। एवमेव 'अदेङ् गुणः' (1.1.2), 'हलोऽनन्तराः संयोगः' (1.1.7) 'मुखनासिकावचनोऽनुनासिकः' (1.1.8) इत्यादीनि सूत्राणि।

अत्रोल्लेखनीयं यत् संज्ञासूत्राणि प्रायः प्रथमाध्याये एव पठितानि सन्ति। कानिचिदेव संज्ञासूत्राणि तत्तत्प्रकरणविशेषे लाघवदृष्ट्या पठितानि दृश्यन्ते। प्रथमाध्यायाद् अग्रिमेष्वध्यायेषु याः संज्ञा बोधिताः सन्ति ता निम्नलिखिताः सन्ति–

समासः, अव्ययीभावः, तत्पुरुषः, द्विगुः, बहुव्रीहिः, द्वन्द्वः, आमन्त्रितम्, सम्बुद्धिः, प्रत्ययः, उपपदम्, कृत्, कृत्यः, सत्, सार्वधातुकम्, आर्धधातुकम्, तद्धितः, गोत्रम्, युव, तद्राजः, विभक्तिः, अभ्यासः, अभ्यस्तम्, आम्रेडितम् इति।

प्रथमाध्याये याः संज्ञा बोधितास्ताः निम्नलिखिताः सन्ति–

वृद्धिः, गुणः, संयोगः, अनुनासिकः, सवर्णम्, प्रगृह्यम्, घु, घः, संख्या, षट्, निष्ठा, सर्वनाम, अव्ययम्, सर्वनामस्थानम्, विभाषा, सम्प्रसारणम्, लुक्, श्लुः, लुप्, टि, उपधा, वृद्धम्, ह्रस्वः, दीर्घः, प्लुतः, उदात्तः, अनुदात्तः, स्वरितः, अपृक्तः, कर्मधारयः, उपसर्जनम्, प्रातिपदिकम्, धातुः, इत्, नदी, घि, लघु, गुरु, अङ्गम्, पदम्, भम्, अपादानम्, सम्प्रदानम्, करणम्, कर्म, अधिकरणम्, कर्ता, हेतुः, निपातः, उपसर्गः, गतिः, कर्मप्रवचनीयः, परस्मैपदम्, आत्मनेपदम्, प्रथमः, मध्यमः, उत्तमः, एकवचनम्, द्विवचनम्, बहुवचनम्, विभक्तिः, संहिता, अवसानम् इति।

एतदतिरिक्ता अण्–अक्–अच् इत्यादयः सुप्, सुट्, आप्, तिङ्, तङ्, त्न्, कृञ्, मात्रच् चेत्यादयः एवं संज्ञाः सन्ति याः 'आदिरन्त्येन सहेता' (1.1.71) इति सूत्रेण सह अइउण् इत्यादिमाहेश्वरसूत्राणां, स्वौजस् (4.1.2), तिप्तस्झि (3.4.78) इत्यादिसूत्राणां चैकवाक्यतया पाणिनिना स्वशास्त्रे बोधिताः, प्रयुक्ताश्च।

तेन कतिपयेष्वन्यविधेष्वपि सूत्रेषु संज्ञासूत्रत्वं स्वीक्रियते। तथाहि उक्तं नागेशेन लघुशब्देन्दुशेखरे 'अइउण्' इत्यादिसूत्राणां विषये, 'स्वौजस्' इति सूत्रविषये च 'एषां क्रमबोधकत्वेऽपि 'आदिरन्त्येन (1.1.71) इत्यनेनैकवाक्यतया वृत्तिपरिच्छेदकत्वेन संज्ञासूत्रत्वम्। क्रमस्य संज्ञाद्वारैवोपयोगात्। एकवाक्यता चादिरकारादिरन्त्येनेता तत्सदृशेन णकारादिना सहोच्चार्यमाण आद्यन्ताक्षिप्तानां संज्ञेति। 'स्वौजस्' (4.1.2) इत्यादीनामप्येतदेकवाक्यतया सुबादिसंज्ञासूत्रत्वं, स्वादिविधायकत्वञ्चेति बोध्यम्' इति।

पाणिनीयाष्टके कतिपया एवमपि प्राचीनव्याकरणतन्त्रीयाः संज्ञाः प्रयुक्ताः सन्ति यासां बोधकानि सूत्राणि न निर्दिष्टानि सन्ति। ताश्च सन्ति–आङ्, औङ्, प्रथमा, द्वितीयेत्यादयः।

**2. परिभाषासूत्रम् –**'अनियमे नियमकारिणी परिभाषा' इति लक्षणानुसारेण अनियमप्रसङ्गे येन सूत्रेण नियमो विधीयते, तत्सूत्रं परिभाषासूत्रम्। परिभाषासूत्रं विधिशास्त्रेणैकवाक्यतयैव लक्ष्यसाधनोपयोगीति कथ्यते–स्वदेशे लक्ष्यासंस्कारबोधजनकत्वे सति विधिसूत्रैकवाक्यतया साधुत्वप्रकारकबोधोपयोगि–बोधजनकत्वं परिभाषात्वम् इति। 'समर्थः पदविधिः (2.1.1) इति सूत्रे उद्योते परिभाषालक्षणविषये एकः श्लोक उद्धृतो नागेशेन, स चायम्–

**एकदेशस्थिता शास्त्रभवने याति दीपताम्।**

**परितो व्यापृतां भाषां परिभाषां प्रचक्षते॥**

एतदनुसारेण परिभाषा एकदेशस्थिता सती सम्पूर्णशास्त्ररूपं भवनं स्वकीयार्थप्रकाशेन प्रकाशयति दीपवत्।

परिभाषासूत्रं यथा–'तस्मिन्निति निर्दिष्टे पूर्वस्य' (1.1.66) इति सूत्रम्। तथा हि 'इको यणचि' (6.1.77) इति सूत्रेण अजुपश्लिष्टस्य इको यण् विधीयते, अचीत्यत्र औपश्लेषिकेऽधिकरणे सप्तमीविधानात्। उपश्लेषस्यार्थो भवति–समीपवृत्तित्वम्। समीपवृत्तित्वं च पूर्वस्येव परस्यापि, अव्यवहितस्येव व्यवहितस्यापि चेति तत्रानियमप्रसङ्गात् 'तस्मिन्निति निर्दिष्टे पूर्वस्य (1.1.66) इति सूत्रेण नियमः क्रियते–अजुपश्लिष्टस्य पूर्वस्यैव, अव्यवहितस्यैव च इको यण् भवतीति।

अथापि 'इको यण् भवति' इत्युक्ते 'इकः समीपे यण् स्यात्' 'इकः स्थाने वा' इत्यनियमप्रसङ्गे 'षष्ठी स्थाने योगा' (1.1.49) इति परिभाषासूत्रेण नियमः क्रियते यद् अनिर्धारितसम्बन्धविशेषा षष्ठी स्थानेयोगा भवतीति स्थानेपदस्योपस्थित्या सूत्रस्यार्थो भवति 'इकः स्थाने यण् भवति' इति।

एवमेव 'स्वौजस्' (4.1.2) इति सूत्रेण स्वादीनां यद् विधानं क्रियते, तत्र कस्मात् प्रातिपदिकात् कस्मिन्नर्थे का विभक्तिरिति अनियमप्रसङ्गे 'कर्मणि द्वितीया' (2.3.2) 'द्व्येकयोर्द्विवचनैकवचने' (1.4.22) 'बहुषु बहुवचनम्' (1.4.21) इत्यादिभिः परिभाषासूत्रैः नियमः क्रियते येन 'स्वौजस्' (4.1.2) इति सूत्रस्यार्थो भवति–एकत्वादिविशिष्टकर्माद्यर्थयोग्य-प्रातिपदिकाच्चेद्विभक्तिस्तदा द्वितीयाया एकवचनमेव, द्विवचनमेव, बहुवचनमेव वेति।

एवमेव 'अनुदात्तङित आत्मनेपदम् (1.3.12) इति सूत्रेण 'तिप्तिस्झि' इति सूत्रास्यार्थो नियम्यते, तेन अनुदात्तेतो, ङितश्च धातोरेवात्मनेपदं भवति।

**3. विधिसूत्रम् –** विधीयते कार्यं येन स विधिः। विपूर्वाद् धाधातोः 'उपसर्गे घोः कि' (3.3.92) इति सूत्रेण करणे किप्रत्यये कृते विधिशब्दो निष्पद्यते। येन सूत्रेण इष्टप्रयोगसिद्ध्यर्थ साक्षात्कार्यविधानं क्रियते तत्सूत्रं विधिसूत्रं कथ्यते। अत एवोच्यते–साक्षाल्लक्ष्यसंस्कारकसाधुत्वप्रकारकबोधजनकत्वं विधिसूत्रत्वमिति। यथा 'इको यणचि (6.1.77) इति सूत्रम्। अनेन हि 'सुद्ध्युपास्यः' इत्यादीष्टप्रयोगसिद्ध्यर्थं साक्षाद्यण्कार्यं विधीयते। एवमेव 'अत इञ्'(4.1.95)इति सूत्रेण दाशरथिः इत्यादिप्रयोगाणां सिद्ध्यर्थं साक्षादिञ्प्रत्ययो विधीयते।

यद्यपि संज्ञासूत्रमपि संज्ञाया विधानं करोति तथापि तस्य गणना विधिसूत्रे न भवति,

तेन साक्षात् कस्यापीष्टप्रयोगस्य सिद्ध्यर्थं कस्यापि कार्यस्य विधानाभावात्।

पाणिनीयाष्टके विधिसूत्रातिरिक्तानि सर्वविधानि सूत्राणि विधिसूत्राणामुपकारकत्वादङ्गभूतानि भवन्ति, विधिसूत्राणि च प्रधानभूतानि।

यद्यपि 'कर्मणि द्वितीया', 'कर्तृकरणयोस्तृतीया' इत्यादीनि परिभाषासूत्राणि, द्वितीयेत्यादि-विधायकानीति व्यवह्रियते, एवमेव 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः', 'तृतीया तत्कृतार्थेन गुणवचनेन' इत्यादीनि संज्ञासूत्राण्यपि समासविधायकानि सूत्राणीति व्यवह्रियन्ते, तथापि विधिसूत्रत्वेन मुख्यरूपेण तानि सूत्राणि परिगण्यन्ते यैः प्रत्ययः, आगमः आदेशो वा विधीयते। यतो हि 'कर्मणि द्वितीया' इत्यादीनि सूत्राणि 'स्वौजस्' इतिविधिसूत्राणि नियमयन्ति न तु कस्यचित्प्रत्ययस्य, आगमस्य, आदेशस्य वा विधानं कुर्वन्ति; अतः मुख्यरूपेणैतानि विधिसूत्राणि न भवितुमर्हन्ति अपि तु एतानि नियमसूत्राण्येव।

एवमेव 'द्वितीया श्रितातीत' इत्यादिभिः समासविधायकसूत्रैः न कश्चित्प्रत्ययः, आगमः, आदेशो वा विधीयते अपि तु 'कृष्णं श्रितः' इत्यादीनां समाससंज्ञा विधीयते, तदनन्तरं, कृत्तद्धितेति सूत्रेण प्रातिपदिकसंज्ञा, ततः 'सुपो धातु–प्रातिपदिकयोः' इत्यनेन सुब्लुक्, पुनश्च विभक्तिकार्ये कृते 'कृष्णश्रितः' इत्यादीष्टप्रयोगसिद्धिर्भवति। तत्र 'सुपो धातुप्रातिपदिकयोः' इति सूत्रेण साक्षाल्लुगादेशः, 'स्वौजस्' इति सूत्रेण च सुप्प्रत्ययश्च भवति, इति कृष्णश्रित इति प्रयोगे 'सुपो धातुप्रातिपदिकयोः' इत्याद्यादेशप्रत्ययागमविधायकानि सूत्राण्येव विधिसूत्रवर्गे आयास्यन्ति, न तु द्वितीया श्रितेत्यादि समाससंज्ञादिविधायकान्यपि।

अत एव 'कर्मणि द्वितीया' (2.3.2), 'द्वितीया श्रितातीत' (2.1.24) इत्यादीनां सूत्राणां पाठः पाणिनिना संज्ञापरिभाषाप्रकरणात्मकयोः प्रथमद्वितीयाध्याययोर्मध्ये कृतः।

अतः परं तृतीयाध्यायतः समाप्तिपर्यन्तं प्रायेण विधिसूत्राणां क्षेत्रं वर्तते, यैः मुख्यरूपेण प्रत्ययः, आगमः, आदेशश्च विधीयन्ते। ततः पूर्वं कतिपयान्येव सूत्राणि दृश्यन्ते यैः आदेशादयोऽपि विधयो भवन्ति। तद्यथा 'ह्रस्वो नपुंसके प्रातिपदिकस्य (1.2.47) इत्यादिना ह्रस्वविधानम्, 'इद् गोण्याः' (1.2.50) इत्यनेन इदादेशविधानम्।

**4. नियमसूत्रम् –** 'पतिः समास एव' (1.4.8) इति सूत्रे काशिकावृत्तेः व्याख्यानग्रन्थस्य न्यायस्य 'सिद्धे सत्यारभ्यमाणो विधिर्नियमार्थः' इति वचनानुसारेण पूर्वतः स्थितेन सूत्रेण सिद्धस्य कार्यस्य पुनर्येन सूत्रेण विधानं क्रियते तत्सूत्रं नियमसूत्रम्। यथा 'पतिः समास एव'

(1.4.8) इति सूत्रम्। अनेन सूत्रेण 'भूपतिना' इत्यादौ घिसंज्ञा विधीयते, सा घिसंज्ञा हरिशब्दवत् भूपतिशब्दस्य 'शेषो घ्यसखि' (1.4.7) इति पूर्वसूत्रेण सिद्धैव। पुनर्यत् घिसंज्ञाया विधानं 'पतिः समास एव' (1.4.8) इति सूत्रेण क्रियते तन्नियमं करोति–'पतिशब्दः समास एव घिसंज्ञो भवति' इति। तेन असमासे पत्या, पत्ये इत्यादौ घिसंज्ञा न भवति।

एवमेव 'राजभ्याम्' इत्यादौ 'सुपि च' (7.3.102) इति सपादसप्ताध्यायीस्थदीर्घविधायक-सूत्रदृष्ट्या प्रवृत्तस्य 'नलोपः प्रातिपदिकान्तस्य (8.2.7) इति त्रैपादिकशास्त्रस्य असिद्धत्वं 'पूर्वत्रासिद्धम्' (8.2.1) इति सूत्रेण सिद्धमेव, पुनर्यद् 'नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति' (8.2.2) इति सूत्रेण नलोपस्यासिद्धत्वातिदेशः क्रियते, तन्नियमार्थो भवति यत् सुब्विध्यादिष्वेव नलोपोऽसिद्धो भवति, नान्यत्र। तेन 'राजाश्व' इत्यादौ राज + अश्व इत्यवस्थायाम् 'अकः सवर्णे दीर्घः' (6.1.101) इति सपादसप्ताध्यायीस्थसूत्रदृष्ट्यापि त्रैपादिकनलोपस्यासिद्धत्वाभावेन सवर्णदीर्घो भवत्येव।

कुत्रचित्सूत्रांशोऽपि नियमार्थो भवति। यथा 'कृत्तद्धितसमासाश्च (1.2.46) इति सूत्रे 'समास' इति सूत्रांशः। नियमः सजातीयापेक्षो भवति। तेन समासग्रहणेन नियमो भवति 'यत्र सङ्घाते पूर्वो भागः पदं तस्य चेद् भवति तर्हि समासस्यैव, न तु वाक्यस्य' इति। तेन 'देवदत्तः ग्रामं गच्छति' इत्यादेः वाक्यस्य प्रातिपदिकसंज्ञा न भवति। वाक्यस्य प्रातिपदिकसंज्ञायां 'सुपो धातुप्रातिपदिकयोः' इति सूत्रेण सुब्लुगापत्तिरूपदोषः स्यात्।

नियमेनानिष्टस्य निवृत्तिर्भवति इति 'अन्यनिवृत्तिफलकत्वं नियमत्वम्', 'इतरव्यावर्तकत्वं वा नियमत्वम्' इत्यपि कथ्यते।

**5. अतिदेशसूत्रम् –** अतिदेशशब्दस्यार्थो भवति–आरोपः। अतद्वति तत्प्रकारकं ज्ञानमारोपः कथ्यते, अर्थात् यस्मिन् पदार्थे यो धर्मो न भवति, तत्र यत्तद्धर्मयुक्तं ज्ञानं भवति, तज्ज्ञानमारोपः, अतिदेशो वा कथ्यते।

आरोपो द्विविधो भवति–आहार्यारोपः, अनाहार्यारोपश्च। बाधकालीनमिच्छाजन्यं ज्ञानमाहार्यारोपो भवति, यथा 'मुखं चन्द्रः' इति। अन्यस्मिन् अन्यधर्मावभासः अनिच्छयाऽपि यत्र भवति तत्र अनाहार्यारोपः, यथा शुक्तौ रजतज्ञानम्।

व्याकरणशास्त्रेऽतिदेशशब्देनाऽऽहार्यारोपस्य ग्रहणं भवति, यतो हि अतिदेशसूत्रेण यस्य धर्मस्यारोपः क्रियते, तत्र प्राक्रियाज्ञानवतामयं बोधो भवत्येव यदारोप्यमाणो धर्मस्तत्र नास्ति।

स धर्मस्तत्र प्रयोगसिद्ध्यर्थमिच्छयाऽऽरोप्यते। यथा 'रामाय' इत्यादौ यादेशे सुप्त्वधर्मो नास्ति, सुप्रत्याहारे तस्य पाठाभावात्। तथापि 'सुपि च' इत्यनेन दीर्घकार्यार्थं सुप्त्वं तत्राऽऽरोप्यते। अत एवोच्यते–आरोपबोधत्वमतिदेशत्वम्।

अतिदेशस्योदाहरणं यथा 'आद्यन्तवदेकस्मिन्' 1.1.21) इति सूत्रम्। 'सत्यन्यस्मिन् यस्मात्पूर्वं नास्ति परमस्ति स आदिरित्युच्यते 'सत्यन्यस्मिन् यस्मात्परं नास्ति पूर्वमस्ति सोऽन्त इत्युच्यते' इति 'आद्यन्तवदेकस्मिन्' (1.1.20) इति सूत्रस्थभाष्यानुसारेण यथा 'कर्त्तव्यम्' इत्यत्र प्रत्ययाद्युदात्तत्वं भवति तथा औपगवः' इत्यत्र न स्यात् 'अ' इति प्रत्यये परभागे वर्णान्तरासंत्त्वेन तत्र प्रत्ययादित्वव्यवहाराऽसम्भवात्। एवमेव यथा 'वृक्षाभ्याम्' इत्यत्र 'सुपि च' इति सूत्रेण अदन्तस्य अङ्गस्य दीर्घो भवति, तथा 'आभ्याम्' इत्यत्र न स्यात्, 'अ' इत्यस्मात् पूर्वभागे वर्णान्तरासत्त्वेन अदन्तत्वव्यवहाराऽसम्भवात्।

अतः 'आद्यन्तवदेकस्मिन्' इति सूत्रेण उभयत्राऽसहाये अकारे आदित्वस्याऽन्तत्वस्य चाऽऽरोपेण 'कर्त्तव्यम्' इत्यत्रेव 'औपगवः' इत्यत्र प्रत्ययाद्युदात्तत्वम्, 'वृक्षाभ्याम्' इत्यत्रेव 'आभ्याम्' इत्यत्र 'सुपि च' इत्यनेन दीर्घत्वं च सिद्ध्यति।

पाणिनीयाष्टके यद्यपि सर्वेषु अध्यायेषु अतिदेशसूत्राणि प्रकीर्णानि सन्ति तथापि प्रथमाध्यायस्य द्वितीये पादे ङित्त्वकित्त्वाऽतिदेशविधायकानि सर्वाधिकानि सूत्राणि सन्ति। अतिदेशसूत्रेषु 'असिद्धवदत्राऽऽभात्' (6.4.22), 'पूर्वत्राऽसिद्धम्' (8.2.1) इमे द्वे सूत्रे स्तः, ये अधिकारत्वेन स्वीकृत्य तयोर्विशालं क्षेत्रं निर्मितं सूत्रकारेण। तत्र 'असिद्धवदत्राऽऽभात् (6.4.22) इति सूत्रस्य क्षेत्रम् (6.4.22) तः 6.4.175) सूत्रपर्यन्तं स्वीकृतम्। पूर्वत्रासिद्धम् '(8.2.1) इत्यस्य च क्षेत्रं सम्पूर्णा त्रिपादी।

पाणिनीयाष्टके द्विविधरूपेण अतिदेशसूत्राणि पठितानि दृश्यन्ते–(1) वतिनिर्देशसहितानि (2) वतिनिर्देशरहितानि च। यथा 'आद्यन्तवदेकस्मिन्' (1.1.20), स्थानिवदादेशोऽनल्विधौ' (1.1.56) 'काले भववत्' (4.2.34) इत्यादीनि वतिनिर्देशसहितानि अतिदेशसूत्राणि। 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' (1.2.1), 'सार्वधातुकमपित्' (1.2.4) 'गोतो णित्' (7.1.90) इत्यादीनि वतिनिर्देशरहितानि सूत्राणि। अतिदेशबोधनाय वतिना निर्देश आवश्यको न वा? वतिना निर्देशे, तद्रहितनिर्देशे च कोऽपि भेदोऽस्ति न वा? इति विषये यथाप्रसङ्गं भाष्ये, प्रदीपे, शब्दकौस्तुभे, न्यासे, अन्येषु च ग्रन्थेषु विचारः कृतोऽस्ति। 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' (1.2.1) इति सूत्रे भाष्ये उक्तं यत्–विनाप्यतिदेशबोधकवतिना अतिदेशस्य बोधो भवत्येव

**********************************************************************

एवं हि तत्रत्यं भाष्यम्–'अन्तरेणापि वतिमतिदेशो गम्यते' तद्यथा–एष ब्रह्मदत्तः। अब्रह्मदत्तं ब्रह्मदत्त इत्याह। तेन मन्यामहे ब्रह्मदत्तवदयं भवतीति। एवमिहाप्यङित्तं ङिदित्याह, ङिद्वदिति गम्यते। अकितं किदित्याह, किद्वदिति गम्यते।' इति।।

भाष्यस्यैवाशयः गाङ्कुटादिसूत्रे न्यासकारेणैवं प्रकटितः–'अतिदेशोऽयमिति। यद्येवम् वतिना निर्देशः कर्त्तव्यः, अन्यथा तदर्थो नावगम्येत; नैतदेवम् परपदार्थे हि प्रयुज्यमानाः शब्दाः वतिमन्तरेणापि वत्यर्थं गमयति'। यथा 'सिंहो माणवकः', 'गौर्वाहीकः इति।'

वतिना निर्देशे, तद्रहितनिर्देशे च कोऽपि भेदोऽस्ति न वेति विषये 'असिद्धवदत्राऽऽभात् (6.4.22) इति सूत्रे कैयटेन स्पष्टीकृतं यत् तयोर्न कोऽपि भेदः। एवं हि तत्रत्यः कैयटग्रन्थः–

'इह क्वचिदुपमानोपमेययोरभेदं विवक्षित्वा सामानाधिकरण्येन निर्देशः क्रियते–अयं बह्मदत्त इति। शास्त्रेऽपि षत्वतुकोरसिद्धः, लिट् कित्, गोतो णित् इति च। तत्र सामर्थ्यादतिदेश-प्रतिपत्तिः। क्वचित्तु प्रतिपत्तिलाघवाय भेदोपक्रमे वतिना निर्देशः क्रियते–ब्रह्मवदयमिति। इहापि असिद्धवदत्राऽऽभात् इति।' इति।

'स्थानिवदादेशोऽनल्विधौ' (1.1.56) इति सूत्रे शब्दकौस्तुभेऽपि विषयोऽयं विचारितः। तदनुसारेण स्थानिवत्सूत्रेण आदेशस्य स्थानी संज्ञा मा भूदित्यर्थं वत्करणमावश्यकम्।

वस्तुतो यत्रोपमानोपमेययोरभेदविवक्षा तत्र वतिरहितनिर्देशः, यत्र भेदविवक्षा तत्र वतिना निर्देश इति भेदाभेदयोर्विवक्षाभेद एव वतिना निर्देशे तद्रहितनिर्देशे च, न तु तात्त्विको भेदः।

**6. निषेधसूत्रम् –** अस्मिन् वर्गे तानि सूत्राणि आयान्ति यानि सामान्यसूत्रप्राप्तकार्याणां विषयविशेषे वारणम् अर्थात् निवृत्तिं कुर्वन्ति।

यथा 'न धातुलोप आर्धधातुके' (1.14) इति सूत्रम्। तथा हि 'इको गुणवृद्धी' (1.1.3) इति सूत्रसहकारेण यथा लविता, पविता इत्यत्र 'सार्वधातुकार्धधातुकयोः' (7.3.84) इति सूत्रेण लूञ् धातोः, पूञ् धातोश्चोकारयोः गुणो भवति तथैव यङन्त लोलुवः, पोपुवः इत्यत्रापि गुणः प्राप्नोति। तत्र 'न धातुलोप आर्धधातुके' इति सूत्रेण निषेधाद् गुणो न भवति। एवमेव यथा 'मार्ष्टी' इत्यत्र वृद्धिर्भवति तथा मरीमृजः इत्यत्र वृद्धिर्न भवति एवमेव 'न तिसृचतसृ' इति सूत्रेण निषेधात् यथा कर्तृणाम्, हर्तृणाम् इत्यत्र दीर्घो दृश्यते तथा तिसृणाम्, चतसृणाम् इत्यत्र दीर्घो न भवति।

यद्यपि नियमसूत्रेणापि निवृत्तिर्भवति, निषेधसूत्रेणापि तथापि नियमसूत्रेण विषयविशेषाणां विधानद्वारा अनिष्टस्य निवृत्तिर्भवति। अतः नियमः निवृत्तिफलको भवति न तु साक्षान्निवर्तकः। निषेधसूत्रं तु विषयविशेषाणां निवृत्तिमेव करोति न तु विषयविशेषाणां विधानमपि। अतः निषेधसूत्रं साक्षान्निवर्तकं भवति।

पाणिनीयाष्टके निषेधसूत्राणां पाठः प्रायः विधिसूत्रानन्तरमेव दृश्यते। केवलम् इड्निषेधसूत्राणां पाठः इड्विधायकसूत्रेभ्यः पूर्वमेव दृश्यते। तद्यथा 'नेड् वशि कृति' (7.2.8) इति इड्निषेधप्रकरणं पठित्वा 'आर्धधातुकस्येड् वलादेः (7.2.35) इत्यादीनि इड्विधायकसूत्राणि पठितानि सन्ति। अत्र किं कारणमिति भाष्यकारेण विचार्य निर्णयः कृतो यत्–'ऋतो भारद्वाजस्य' (7.2.63) इत्येतस्मान्नियमात् 'तुष्टोथ, दुद्रोथ, शुश्रोथ इत्येतेषु प्रयोगेषु पपिथ, ययिथ इत्यादाविव इट् प्राप्यते। तस्य निषेधः सामान्यसूत्रानन्तरं पठितैः निषेधसूत्रैः न सम्भवति, निषेधसूत्रैः सामान्यसूत्रेण प्राप्तकार्यस्यैव निषेधदर्शनात्। यदि पुनः 'नेड् वशि कृति' (7.2.8) इतीड्निषेधप्रकरणे 'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि' (7.2.13) इति इड्निषेधसूत्रमपि इड्विधायकसूत्रेभ्यः पूर्वं पठ्यते तर्हि सूत्रमिदम् 'आर्धधातुकस्येड् वलादेः' (7.2.35) इति सामान्यसूत्रेण प्राप्तस्येटो निषेधं करिष्यत्येव सहैव 'ऋतो भारद्वाजस्य (7.2.63) इति नियमाद्, विशेषविहितस्यापीटो निषेधं करिष्यति। एवं हि इण्निषेधप्रकरणे पठितैः सूत्रैः येन केनापि विधिना प्राप्तस्येटो निषेधो भवतु' इत्येतदर्थमेव विधिसूत्रेभ्यः पूर्वमेव इण्निषेधसूत्राणि पठितानि। अत्रत्यं भाष्यमित्थम्–'नेड् वशि कृति (7.2.8)।।

किमर्थं पुरस्तात्प्रतिषेध उच्यते, न विध्युत्तरकालः प्रतिषेधः क्रियते। तद्यथा अन्यत्रापि विध्युत्तरकालाः प्रतिषेधा भवन्ति। क्वान्यत्र? 'कर्तरि कर्मव्यतिहारे' (1.3.14), 'न गतिहिंसार्थेभ्यः' (1.3.15) इति। 'देवताद्वन्द्वे च' (7.3.21) 'नेन्द्रस्य परस्य' (7.3.22) इति।.......। नैवं शक्यम्, इह हि तुष्टोथ, दुद्रोथ 'ऋतो भारद्वाजस्य' (7.2.63) इत्येतस्मान्नियमादिट् प्रसज्येत।......। एवमपि सामान्यविहितस्यैवेटः प्रतिषेधो विज्ञायेत, विशेषविहितश्चायं थलीति। पुरस्तात्पुनः प्रतिषेधे सत्यनारभ्यापवादोऽयं भवति। येन यावानिण्नाम तस्य सर्वस्यैव प्रतिषेधः सिद्धो भवति।'

**7. अधिकारसूत्रम् –** उत्तरोत्तरत्र गमनमधिकार इति प्रसिद्धवचनानुसारेण अधिकारसूत्रं तत्कथ्यते यस्य व्याख्यानतो निर्णीतावधिपर्यन्तमुत्तरोत्तरसूत्रेषूपस्थितिर्भवति। यथा 'कारके' (1.4.23) इति सूत्रम्। अस्याऽधिकारः 'तत्प्रयोजको हेतुश्च (1.4.55) इति सूत्रं यावत्।

पाणिनीयाष्टके बहूनि अधिकारसूत्राणि सन्ति, तद्यथा–प्रत्ययः (3.1.1), परश्च (3.1.2), ङ्याप्प्रातिपदिकात् (4.1.1), तद्धिताः (4.1.76) इत्येषां सर्वेषां सूत्राणामधिकारः, पञ्चमाध्यायपर्यन्तं भवति। 'धातोः' (3.1.91) इति सूत्रस्याधिकारः तृतीयाध्यायसमाप्तिपर्यन्तम्। स्त्रियाम् (4.3.3) इति सूत्रस्याधिकारः 'समर्थानां प्रथमाद् वा' (4.10.82) इति सूत्रं यावत्। 'समासान्ताः' (5.4.68) इति सूत्रस्य पादपर्यन्तम्। संहितायाम् (6.1.72) इत्यस्य 'पारस्करप्रभृतीनि च' (6.1.157) इति यावत्। 'अङ्गस्य' (6.4.1) इत्यस्य सप्तमाध्यायान्तं यावत्। 'पदस्य' (8.1.16) इति सूत्रस्य 'इडाया वा' (8.3.54) इति यावदधिकारो भवति। एवमेव पाणिनीयाष्टके 'असिद्धवदत्राऽऽभात् (6.4.22), पूर्वत्राऽसिद्धम् (8.2.1), कृदतिङ् (3.1.95) विभाषा (2.1.11), प्राक्कडारात्समासः (2.1.3), प्राग्रीश्वरान्निपाताः (1.4.56) पदात् (8.1.67) इत्यादीनि प्रसिद्धानि अधिकारसूत्राणि दृश्यन्ते।

अधिकारसूत्रेण स्वदेशे किमपि लक्ष्यं न साध्यतेऽपि तु स्वकीयाधिकारक्षेत्रेषु स्वकीयोपस्थितिप्रदानेन तत्तत्सूत्रस्यार्थमधिकं करोति इति एतादृशसूत्राणाम् 'अधिकारः' इति नामान्वर्थमस्ति। 'स्वरितेनाधिकारः' (1.3.11) इति सूत्रे भाष्ये 'एवमिहाप्यधिकमयं कारं करोतीत्युच्यते' इति कथनेनापि अस्यान्वर्थत्वं सूचितं भवति।

अधिकारसूत्रस्य लक्षणं दृश्यते न्यायकोशे–'स्वदेशे लक्ष्यसंस्कारकवाक्यार्थशून्यत्वे सति विधिसूत्रैकवाक्यतापन्नत्वमधिकारत्वम्' इति।

अधिकारसूत्रस्य प्रयोजनविषये महाभाष्ये उक्तं यद् अधिकारत्वेन निर्दिष्टं यत् पदं, पदसमूहो वा तस्य निर्देशोऽग्रिमेषु सूत्रेषु कर्त्तव्यो न भवतीति महल्लाघवं भवति। तथा ह्युक्तं 'स्वरितेनाधिकारः (1.3.11) इति सूत्रे भाष्ये 'अधिकारः प्रतियोगं तस्यानिर्देशार्थः।' इति।

कारके (1.4.23) इति सूत्रस्य पदमञ्जर्यनुसारेण अधिकारोऽनेकप्रकारको भवति। तद्यथा–

1. संज्ञाधिकारः – प्रत्ययः (3.1.1) इत्यादि।
2. विशेषणाधिकारः – शेषे (4.2.92) इत्यादि।
3. स्थान्यधिकारः – एकः पूर्वपरयोः (6.1.84) इत्यादि।
4. निमित्ताधिकारः – ङ्याप्प्रातिपदिकात् (4.1.1), धातोः (3.1.91) इत्यादि।

5. निमित्ताधिकारः – आर्धधातुके (2.4.35) इत्यादि।

6. आदेशाधिकारः – अपदान्तस्य मूर्द्धन्यः (8.3.55) इत्यादि।

यथापूर्वं प्रदर्शितमधिकारसूत्राणि बहूनि सन्ति पाणिनीयाष्टके। तेषु प्राक्कडारात्समासः (2.1.3), प्राक्क्रीताच्छः (5.1.1), प्रागिवात्कः (5.3.70) प्राग्दीव्यतोऽण् (4.1.83) प्राग्रीश्वरान्निपाताः (1.4.56) आकडारादेका संज्ञा (1.4.1) इत्यादीन्यल्पीयांस्येव सूत्राणि सन्ति येष्वेवं निर्देशो विद्यते यदस्याधिकारः कुत्र यावद् विद्यते। बहूनि सूत्राणि एवमेव सन्ति येषामवधिः कुत्र यावदिति निर्देशो नास्ति। अवधिनिर्णयः कथं भविष्यतीति जिज्ञासायां स्वरितेनाधिकारः (1.3.11) इति सूत्रे महाभाष्ये उक्तं यद् व्याख्यानेन अवधिनिर्णयः कर्त्तव्यः इति।

अधिकारसूत्रेषु यथाऽन्यत्र विनाप्यवधिनिर्देशेनावधिनिर्णयो व्याख्यानेन भवति तथैव प्रागादिघटिताधिकारसूत्राणामपि अवधिनिर्णयो व्याख्यानेन सम्भवति तथापि यत् तत्तत्सूत्रेषु प्रागादिग्रहणं कृतं तस्य प्रयोजनं काशिकादिग्रन्थेषु यथावसरं विचारितम्। तद्यथा 'प्राग्रीश्वरान्निपाताः' (1.4.56) इति सूत्रे काशिकायामुक्तम् –'प्राग्वचनं समावेशार्थम्। गत्युपसर्गकर्मप्रवचनीयसंज्ञाभिः सह निपातसंज्ञा समाविशतीति' इति। एवमेवान्येषामपि अवधिनिर्देशकपदानां विशिष्टप्रयोजनमूह्यम्।

एवं हि नानाग्रन्थानां पर्यालोचनपूर्वकं प्रणीतेनानेन शोधपत्रेण संस्कृतवाङ्मयस्य विविधेषु शास्त्रेषु निष्णातानाम्, भारतस्य निधिभूतायाः संस्कृतभाषायाः प्रचाराय, प्रसाराय च मनसा, वाचा, कर्मणा च समर्पितानाम्, मुजफ्फरपुरनगरे विद्यमाने बी.आर. बिहार विश्वविद्यालये संस्कृतविभागस्य पूर्वविभागाध्यक्षाणां, कामेश्वरसिंहदरभंगासंस्कृतविश्वविद्यालयस्य प्राक्तनप्रतिकुल–पतीनां डॉ. सतीशचन्द्रझामहाभागानां भूयो भूयः सादरमभिनन्दनं करोमि।

**डॉ. सुरेश्वर झा**
प्राचार्यः, स्नातकोत्तरव्याकरणविभागः
कामेश्वर सिंह दरभंगा संस्कृतविश्वविद्यालयः
दरभङ्गा (बिहार)



# वर्त्तमानसमये व्याकरणस्य शैक्षणिक-पद्धतिः

**डॉ. शशिनाथ झा**

**साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।**
**अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धनम्।।**

इतिवाक्यपदीयब्रह्मकाण्डोक्तदिशा साधुशब्दज्ञानं व्याकरणस्य मुख्यं लक्ष्यं वर्तते। अत एव व्याकरणशास्त्रस्यापरं नाम शब्दानुशासनमस्ति। अनुशिष्यन्ते = अपशब्देभ्यो विविच्य बोध्यन्ते साधुशब्दा अनेनेति तस्य व्युत्पत्तिः। साधुशब्दज्ञानाय अनेकानि व्याकरणानि काले-काले रचितानि। तेषां स्वस्वोद्देश्यं पृथग्विधं वर्तते। तथाहि–सकलशब्दव्युत्पादनं हि ऐन्द्रव्याकरणस्य लक्ष्यं, शब्दानां धातुमूलकत्वसाधनं शाकटायनव्याकरणस्य लक्ष्यं, लाघवम् आपिशलव्याकरणस्य लक्ष्यं, अतिलाघवेन लौकिक–वैदिकोभयविधशब्दबोधनं पाणिनीयव्याकरणस्य लक्ष्यं, लौकिकशब्दबोधनं चान्द्रादिव्याकरणस्य लक्ष्यं, बालकादिऋजुमत्युपकारः सारस्वतव्याकरणस्य लक्ष्यं, सामान्येन संस्कृतभाषायां प्रवेशः कतिपयाधुनिकव्याकरणानां लक्ष्यं वर्तते।

संस्कृतभाषा चिरन्तनकालादेव पाणिनीयव्याकरणानुशासितमिति सर्वविदितमेव। एतत्प्रभावादेवेयं भाषा पुरातनी सत्यपि नित्यनूतनाऽथ च प्रवर्धमानावलोक्यते। अन्याः प्राक्तन्यो भाषा लुप्ता दुर्बोधा वा सञ्जाता अनुशासनाभावात्, परन्तु संस्कृतभाषा पाणिनीयानुशासनवशादेव अमरवाणीति प्रथिता, साम्प्रतमपि प्रचलितास्ति। इत्त्थं पाणिनीयव्याकरणस्य प्रभावातिशये विद्यमानेऽपि अन्यान्यपि कातन्त्रचान्द्रादिव्याकरणानि क्षेत्रविशेषे प्रचलितानि जातानि। परन्तु पाणिनीयं व्याकरणं सम्पूर्णे भारते देशान्तरेऽपि व्यापकरूपेण व्यवहृतमस्त्येव।

साम्प्रतं पाणिनीयव्याकरणस्य शैक्षणिकपद्धतिस्त्रिपथगावलोक्यते–

(1) प्राचीनव्याकरणम्, (2) नव्यव्याकरणम्, (3) आधुनिकव्याकरणञ्चेति।

साम्प्रतिक–विश्वविद्यालयीयपाठ्यक्रमे प्रधानविषयरूपेण यत्र व्याकरणशास्त्रस्योल्लेखो

दृश्यते तत्र नव्य–प्राचीनयोरुल्लेखो वैकल्पिकरूपेणास्ति। प्रथम–मध्यमपरीक्षयोस्तृतीयवैकल्पिकतया सारस्वतव्याकरणस्योल्लेखो भवति, परन्तु शास्त्रिवर्गे आचार्यवर्गे च न तथा, तत्र प्राचीन–नव्ययोरेवोल्लेखोऽस्ति।

सामान्यविषयरूपेण (न तु प्रधानविषयरूपेण) यत्र पाठ्यक्रमे व्याकरणाध्ययनस्य व्यवस्था भवति तत्र भट्टोजिदीक्षितस्य वैयाकरणसिद्धान्तकौमुदी, मध्यकौमुदी, वरदराजस्य लघुकौमुदी च अंशतो निर्धारिता, अथ च आधुनिकव्याकरणानि पाणिनीयाश्रितानि, पाश्चात्यशैलीसमाश्रितानि वा पाठ्यन्ते।

साम्प्रतं पाठ्यक्रमे निर्धारितानां व्याकरणशिक्षणपद्धतीनां परिचयः समीक्षा च प्रस्तूयेते–

( 1 ) **प्राचीनव्याकरणम् –** अत्र पाणिनेरष्टाध्यायी, काशिकावृत्तिः, न्यासः, पदमञ्जरी, सम्पूर्णं महाभाष्यं प्रदीपोद्योतसहितं, माधवीया धातुवृत्तिः, सम्पूर्णं वाक्यपदीयञ्चेति ग्रन्था अध्याप्यन्ते। आरम्भे शब्दमात्रा अष्टाध्यायी कण्ठस्थीक्रियते। तदनु सूत्राधारेणैवार्थज्ञानं सोदाहरणं क्रियते। सम्पूर्णग्रन्थानुशीलनेनैव शब्दसाधनिकानुगमः सम्भवति। सूत्रज्ञानात् पृथग् वार्तिक–भाष्याद्यनुगमः काशिकावृत्तिद्वारा भवति। अत्राध्ययने पर्याप्तधैर्यस्य आवश्यकता भवति। पाणिनेः स्वाभविकाध्ययनमनयैव पद्धत्या सम्भवति। सप्तदशशताब्दात् पूर्वमनयैव पद्धत्या सर्वे विद्वांसः सफलीभूताः। सर्वतोभावेन समर्पिताश्छात्राः साम्प्रतमपि अनया पद्धत्या योग्या भवन्ति। कण्ठस्थायामष्टाध्याय्यामियं पद्धतिरतीव सुगमा लाघवेन बोधनक्षमा चास्ति।

परन्तु तादृशधैर्यस्य अभावे पद्धतिरियं नोपकारिका, अपितु उद्वेजिकैव। किञ्च सकलशास्त्रेषु यन्नव्यतायाः पदार्पणं जातं, यथा–न्याये, मीमांसायां, वेदान्ते च तस्य अस्यां पद्धतौ समावेशो नास्ति। अर्थात् तत्तत्पदार्थस्य सूक्ष्मतया अनुगमः प्राच्यपरम्परयैवात्र भवति, न तु नव्यशैल्या। यथा – किन्नाम उपदेशत्वम्? आद्योच्चारणत्वम्। तत्त्वं च अज्ञातस्वस्वरूपोच्चारणत्वम् इत्यादि। किञ्चैकस्य प्रयोगस्य सम्पूर्णसाधनिका एकत्रास्यां दुर्ल्लभा। सा हि प्रक्रियाग्रन्थेषु सिद्धान्तकौमुद्यादिषु वर्तते। सामान्यतश्छात्रा एतदेव वाञ्छन्ति।

( 2 ) **नव्यव्याकरणम् –** अत्र वैयाकरणसिद्धान्तकौमुदी, तद् व्याख्याग्रन्थाः = प्रौढमनोरमा–शब्दरत्नम्, लघुशब्देन्दुशेखरः सपरिष्कारः, भूषणसारः, वैयाकरणसिद्धान्तलघुमञ्जूषा, परमलघुमञ्जूषा, परिभाषेन्दुशेखरः सपरिष्कारश्चेत्यादयो ग्रन्थाः पाठ्यन्ते। महाभाष्यं नवाह्निकं, वाक्यपदीयब्रह्मकाण्डञ्चेत्युभयप्रणालीपाठ्यग्रन्थौ स्तः।

नव्यव्याकरणे प्रक्रियाग्रन्थः (सिद्धान्तकौमुदी) आधारोऽस्ति। तत्र प्रयोगसिद्ध्यनुसारं पाणिनीयसूत्राणि समुपस्थापितानि भवन्ति। अतः पाणिनेः सूत्रपाठक्रमोऽत्र समादृतः समाश्रितश्चापि, सूत्रोपन्यासः प्रयोजनानुसारं तिष्ठति, न तु पाणिनेः क्रमानुसारम्। तेन अनुवृत्तिज्ञाने पूर्वापरज्ञाने काठिन्यमापतति। अतएव तत्साधनाय सूत्रस्य वृत्तिः कण्ठस्थीक्रियते। यद्यपि तत्र गौरवग्रस्ततास्ति, तथापि फलमुखगौरवस्यादोषावहत्वात् तत्स्वीकृतमत्र। सिद्धान्तेकौमुद्यां वृत्तौ भाष्यसिद्धान्तो निगूढो भवति। अर्थात् प्रक्रियापेक्षी भाष्यसिद्धान्तः सकलोऽप्यत्र सन्निहितः। किञ्च प्रयोगसाधने आवश्यकानि वार्तिकानि परिभाषाश्चात्र संगृहीतानि सन्ति। अतः सिद्धान्तकौमुदी मुनित्रयसिद्धान्तप्रतिपादकतया सम्पूर्णं व्याकरणमस्ति। अतएवोक्तं–

**कौमुदी यदि नायाति वृथा भाष्ये परिश्रमः।**

**कौमुदी यदि चायाति वृथा भाष्ये परिश्रमः॥** इति।

एतत्क्रमे यावान् ग्रन्थांशः पठ्यते, तेन तावान् प्रयोगः पूर्णरूपेण सिद्धो भवति। अर्थात् यत् पठितं, तत्फलं सद्य एव भवति। इति सद्यःफलदातृत्वेन एतत्क्रमस्य सर्वत्र समालम्बनं भवति। व्याकरणस्य मुख्यं प्रयोजनं साधुशब्दज्ञानं प्रक्रियाक्रमे सारल्येन साध्यते, अत एव व्याकरणस्यार्थोऽत्र नैव न्यूनीभवति। सूत्रार्थसूक्ष्मतायां बृहद्विचारः रूपसिद्धेरनन्तरस्य कृत्यं वर्तते।

बहूनां धारणेयं भ्रान्तिमूला यत् नव्यव्याकरणस्य काठिन्यमेव छात्राणां पलायनस्य कारणमस्ति। वस्तुतः पलायनस्य अनेकानि कारणानि भवन्ति–मन्दबुद्धित्वम्, धैर्याभावः, प्रवृत्त्यभावः, अर्थलिप्सानैराश्यमित्यादीनि। उत्तमाधमाद्यधिकारिभेदेनाध्यापनव्यवस्था सकलप्रणालीवद् नव्यव्याकरणेऽप्यस्ति।

**प्राचीन–नव्यव्याकरणयोर्भेदकतत्त्वम्**

**(क) कालगतभेदः–**षोडशशताब्दात् पूर्वं प्राचीनव्याकरणस्य, ततः परं नव्यव्याकरणस्य युगमस्ति।

यद्यप्यधुनापि प्राचीनं प्रचलति।

**(ख) शैलीभेदः–**प्राचीने अष्टाध्यायीक्रमो नव्ये तु रूपसिद्ध्यनुसारं सूत्राणां स्वकीयः क्रमोऽस्ति।

**( ग ) विचारभेदः**—अर्थवत्त्वं, प्रातिपदिकार्थः, शक्तिरित्यादिविषये मतभेदोऽप्यस्ति।

**( घ ) भाषागतवैलक्षण्यम्**—यत्र प्राचीने सर्वव्यवहार्या भाषा समाश्रिता तत्र नव्ये परिष्कृता भाषाङ्गीकृतास्ति। यथा—'नियतोपस्थितिकः प्रातिपदिकार्थः' इत्यस्य बोधो नव्यव्याकरणे इत्थं कार्यते – "प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिविषयताश्रायत्वमिति।"

**( 3 ) पारम्परिकम् आधुनिकव्याकरणम्** – पाणिनीयव्याकरणाधोरण साम्प्रतिक–सामान्यजिज्ञासूनां कृते कतिपयव्याकरणग्रन्था निर्मिताः। तेषु कतिपये सम्पूर्णाः, कतिपये च संक्षिप्ताः सन्ति। संक्षिप्तेषु पं. रामचन्द्र झा शर्मणः संस्कृतव्याकरणम्, डॉ. जयमन्त मिश्रस्य संस्कृतव्याकरणोदय इत्याद्याः सन्ति। तदाधारेण संस्कृतभाषाप्रवेशः सुकरो भवति। सम्पूर्णव्याकरणत्वेन पं. ईश्वरचन्द्रविद्यासागरस्य संस्कृत व्याकरणकौमुदी, डॉ. मोरेश्वर रामचन्द्र काले महोदयस्य 'हायर संस्कृतग्रामर', पं. चारूदेवशास्त्रिणः 'संस्कृतव्याकणचन्द्रोदयः', डॉ. नेमिचन्द्रशास्त्रिणः 'चन्द्रसंस्कृतव्याकरणम्' इत्याद्याः ग्रन्थाः सन्ति। तेषु विद्यासागरमहोदया पाणिनिमनुसृत्यापि बहुत्र स्वकीयानि सूत्राणि प्रत्ययादीनि प्रकल्पन्ते। परन्तु बोधनशैली सुगमा वर्तते। पं. चारुदेवशास्त्रिणो व्याकरणं साम्प्रतिकयुगे सर्वाधिकं महत्त्वपूर्णमस्ति। तत्र सुगमबोधनशैली यद्यपि समाश्रिता, परन्तु विविधपर्यासोद्धरणात्मकान्युदाहरणानि बुधजनवेद्यानि साधारणजिज्ञासूनां कृते काठिन्यमाविष्कुर्वन्ति। उच्चतमकक्षाश्रिता एनं ग्रन्थमाश्रित्य व्याकरणानुशासनज्ञानपूर्वकं चारु प्रयोगं कर्त्तुं प्रभवो भवितुमर्हन्ति। ते उच्चस्तरीयप्रयोगं कर्त्तुं शक्नुवन्ति।

**( 4 ) पाश्चात्याधारितं संस्कृतव्याकरणम्** – पाश्चात्यैः ह्विट्ने प्रभृतिभिस्त-दनुसारिभिर्भारतीयैरपि सरलया शैल्या व्याकरणानि रचितानि। तदाधृत्य संस्कृतभाषाज्ञानं झटिति जायते। किन्तु तत्र ज्ञाने दृढ़ता आत्मविश्वासश्च न भवति। तत्र शब्दरूप–धातुरूप-प्रभृतीनां बृहत् सूची भवति। तदभ्यासे भूयान् परिश्रमो भवति, तथापि ज्ञाने पूर्णता न जायते।

**( 5 ) पाणिनीयेतरव्याकरणम्** – सारस्वतादि लौकिकप्रयोगबोधकानि व्याकरणा-न्यपि स्वस्वोद्देश्यानुसारं साधुशब्दज्ञानसम्पादकानि भवन्ति।

**( 6 ) व्याकरणशिक्षणे नवीनदृष्टिः** – डॉ. धर्मेन्द्रनाथ शास्त्रि–ब्रह्मचारिमहोदयेन 'संस्कृतव्याकरणं नवीन रूपे' इत्याख्यो ग्रन्थो हिन्दीभाषायां लिखितः। तत्र व्यावहारिकी सरलशिक्षणपद्धतिः प्रकाशिता। मुख्यतया तत्र विषयप्रतिपादने पौवापर्यप्रसङ्गः समवतारितो येन प्रतिपत्तिलाघवं प्रदर्शितं भवति। यथा–सुबन्तप्रकरणे विभक्तेः स्वरूपपरिचायकं रूपमनुक्तवैव

अदन्तशब्दरूपप्रतिपादनं न समुचितमिति तेन प्रतिपादितम्। यतो हि तत्र बहूनां विभक्तीनामादेश एव भवति। अत एव सर्वप्रथमं जलमुच्शब्दः पाठनीयो यत्र विभक्तयः संयुक्ताः स्पष्टं श्रूयन्ते। परन्तु एतेन बहुसारल्यं नैव जायते। सूत्रं विना बोधिते विषये दृढतया इदमित्त्थं कथयितुं न शक्यत इत्यपि विभावनीयम्।

**निष्कर्षः—**अधिकारिभेदेन, प्रयोजनभेदेन समेषां व्याकरणग्रन्थानां, समासां पद्धतीनाञ्च समुपयोगः समुचित एव। स्वोद्देश्यानुरूपमेव छात्रैः पद्धतिश्चेतव्या। ये छात्राः सामान्यतः कार्यनिर्वाहकं संस्कृतज्ञानं वाञ्छन्ति ते पं. रामचन्द्रझामहोदस्य व्याकरणं पठन्तु। ये मुनित्रयसिद्धान्तं सूक्ष्मेक्षिकया सपरिष्कारं ज्ञातुमिच्छन्ति ते नव्यव्याकरणं पठन्तु। ये परिष्कारभीताः समग्रं व्याकरणं समधिगन्तुं वाञ्छन्ति ते प्राचीनव्याकरणं समाश्रयन्तु। अधिकारिभेदेन सर्वे पक्षाः व्यवस्थिताः सन्ति। मनोयोगो धैर्यञ्च सर्वपद्धतौ परमावश्यकमिति।

**डॉ. शशिनाथ झा**
प्राचार्यः (व्याकरणे विभागाध्यक्षः)
का. सिं. द. संस्कृत विश्वविद्यालयः
दरभङ्गा (बिहारः)



# प्रभासक्षेत्रस्य तान्त्रिकदृष्ट्या महत्त्वम् - एका नूतना प्रस्थापना

**डॉ. रवीन्द्रकुमार खाण्डवाला**

संस्कृतसाहित्ये प्रभासक्षेत्रस्य महिमा वेदैः महाकाव्यैः पुराणैः गीतः। अयं महिमा अवाङ्मनसगोचरः अस्ति। श्रीकृष्णसम्बद्धम् प्रभासक्षेत्रम्, मुक्ताहारे कौस्तुभमणिसदृशं सर्वललामभूतं वर्तते। किन्तु अत्र यन्माहात्म्यं वर्णितं तदेव निरूपयितुं न मे प्रयत्नः। किन्तु भगवत्या हिमगिरिनन्दिन्याः त्रिपुरसुन्दर्याः कृपाकटाक्षेण या कृपा मयि अनुभूता तया कृपया प्रभासक्षेत्रस्य अपूर्वमहिमानं स्थापयितुं मम मतिः गिरिजया एव प्रेरिता इति मन्ये।

द्वादशज्योतिर्लिङ्गेषु सोमनाथस्य गणना सर्वप्रथमं कस्मात् कार्या इत्यत्र कथयन्ति यत् अत्र भगवता सोमेन दक्षशापपीडितेन क्षीणेन क्षीणमहिम्ना चन्द्रेण तपः कृतम् अपि च शिवप्रसादः लब्धः किन्तु किम् इयं केवलं पुराणानां कल्पिता कथा अस्ति? चन्द्रेण कीदृशं तपः कृतम्? केन मन्त्रेण सिद्धिमार्गः लब्धः[1] कस्मात् तेन प्रभासक्षेत्रे एव तपस्या कृता? भारते वाराणसी तु शिवस्य साक्षात्कारकारिणी नगरी अस्ति, यस्यां शशिमौलिः स्वयं पार्वत्या सह विराजते। अतः वाराणसीं त्यक्त्वा इन्दोः अत्र कथमवस्थानमभवत् इति केनापि ग्रन्थेन न स्पष्टीकृतम्। अतः पौराणिकीं कथां मत्वा वयं प्रभासक्षेत्रस्य चन्द्रस्य तपसः रहस्यं ज्ञातुं न कदापि प्रयतामहे।

अधुना तद्रहस्यं पराम्बायाः कृपया उद्घाट्यते। ऋग्वेदस्य श्रीसूक्तम् अत्र किञ्चित् सूचयति। अस्मिन् सूक्ते पञ्चम्याम् ऋचायां निर्देशो वर्तते, यथा–

**चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्।**
**तां पद्मिनीं शरणमहं प्रपद्ये, अलक्ष्मीर्मे नश्यतां त्वां वृणे॥**[2]

अस्मिन्नेव सूक्ते एकः अन्योऽपि मन्त्रः सूचयति यत् प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् किन्तु अत्र पाठभेदेन प्रादुर्भूतः सुराष्ट्रेऽस्मिन् इत्यपि अवगम्यते। अस्य विशदा चर्चा भुवनेश्वरीपीठेन

प्रकाशिते श्रीसूक्ते वर्तते। अधुना यदा विचारयामः तदा 'प्रभासां' शब्देन सह 'चन्द्राम्' इत्यस्य संयोगः चमत्कारजनकः अस्ति। चन्द्रेण प्रभासक्षेत्रे पुनरपि यशः प्राप्तम्, पुनरपि तस्य मूर्तिः यशसा ज्वलन्ती जाता। चन्द्रेण पद्मिन्याः अर्थात् त्रिपुरसुन्दर्याः उपासना कृता। सोमेन उमया सहितः शिवः उपासितः तेन असौ समग्रे ब्रह्माण्डे प्रतिष्ठितः जातः।

यदि कोऽपि कथयेत् यत् अत्र 'प्रभासाम्' इत्यस्य पदस्य अर्थः प्रभासक्षेत्रे कथं भवति, अयं तु दुराकृष्टः अर्थः, तन्न। वयं समाधानं करिष्यामहे। अस्मिन् सूक्ते सप्तम्याम् ऋचायां 'सुराष्ट्रस्य' शब्दस्य निर्देशो वर्तते। अयं निर्देशः न केवलम् आकस्मिकः। ऋग्वेदे सोमनाथस्य निर्देशः अन्यत्रापि वर्तते यथा–

**यत्र गङ्गा च यमुना च यत्र प्राची सरस्वती।**

**यत्र सोमेश्वरो देवस्तत्र माममृतं कृछन्दो परिस्त्रव॥**[3]

अतः भगवान् श्रीसोमनाथः वेदकालेऽपि प्रसिद्ध एव आसीत्। श्रीयन्त्रं चन्द्रविद्यायन्त्रं कथ्यते। **शाक्ततन्त्रे सादिविद्या चन्द्रोपासिता विद्या अस्ति। सा विद्या तन्त्रग्रन्थेषु–**

**स ह क ए ई ल ह्रीं**
**स ह क ए ई ल ह्रीं**
**स ह क ए ई ल ह्रीम्।** इति सादिविद्यामन्त्रः।[4]

तैत्तिरीये आरण्यके अरुणोपनिषद् इत्याख्या उपनिषद् वर्तते।[5] अस्याः ऋषिः अरुणकेतुः वर्तते। वस्तुतः इयं श्रीविद्या एव अमृतप्राप्तिविद्या, यया भगवता सोमेन पुनर्जीवनं प्राप्तम्। अपि च तस्य शापः दूरीभूतः।

प्रभासक्षेत्रं विशिष्टक्षेत्रम् अस्ति। अत एव सोमेन अत्रागत्य सादिविद्यायाः दर्शनं कृतम्। स एव अस्याः विद्यायाः ऋषिः। श्रीयन्त्रं सोमात्मकम् अपि कथ्यते। इदं यन्त्रं कथं सोमात्मकम् इति कोऽपि पृच्छेत् चेत् अस्य रहस्यस्य उद्घाटनं सौन्दर्यलहर्याः लक्ष्मीधराटीकायाम् अस्ति।6 श्रीयन्त्रस्य मध्ये बिन्दुः शक्तिशिवयोः सामरस्यस्थानम् बैन्दवस्थानम् अथवा भगवत्याः मणिद्वीपस्य पर्यङ्कः कथ्यते। अयं बिन्दुरेव शक्तिशिवयोः परमाद्वैतं सूचयति। श्रीविद्यायाः षोडशीमन्त्रः केवलं गुरुकृपया प्राप्यते। इयं षोडशी कला एव भगवती महात्रिपुरसुन्दरीरूपा पराम्बा राराजते। भगवता शङ्कराचार्येण द्वादशज्योतिर्लिङ्गस्तोत्रे सोमनाथस्य वर्णनं साकूतं कृतम्, यथा–

**सौराष्ट्रदेशे विशदेऽतिरम्ये ज्योतिर्मयं चन्द्रकलावतंसम्।**

**भक्तिप्रदानाय कृपावतीर्णं तं सोमनाथं शरणं प्रपद्ये॥**

अत्र 'सौराष्ट्रदेशे' इति पदं 'प्रादुर्भूतः' सुराष्ट्रेऽस्मिन्' इति अनेन पदेन सादृश्यं भजते। किन्तु 'कलावतंसम्' इत्यस्य पदस्य कोऽर्थः? वस्तुतः भगवान् शङ्कराचार्यः सौन्दर्यलहर्याः प्रणेता रहस्यमिदं जानाति यत् चन्द्रकलासु या कला अवतंसभूता सा षोडशीविद्या एवास्ति। षोडशीविद्या न कदापि वर्धते, न कदापि लीयते, न वा कदापि क्षीयते। सैवामृतविद्या। तस्या एव उपासना सोमेन कृता। सा नित्या पराम्बा एव 'चन्द्रां प्रभासां यशसा ज्वलन्तीम्' इति मन्त्रेण श्रीसूक्ते वर्णिता। सोमेन प्रभासक्षेत्रे आगत्य सोमनाथस्य अर्थात् उमासहितस्य शिवस्य उपासना कृता। 'ओम्कारः' वस्तुतः अ, उ, म् इति वर्णत्रयेण उमा सोमः इति शब्दयोरपि वर्णविपर्ययेण जनकः।

यस्मिन् क्षेत्रे सादिविद्या सफलीभूता, उद्भूता अपि च सोमाय चैतन्यमयी जाता, तदेव क्षेत्रं प्रभासक्षेत्रम् अस्ति। अतएव इदं रहस्यं जानता कृष्णेन स्वदेहोत्सर्गः प्रचण्डे ज्योतिर्मये क्षेत्रे कृतः। वस्तुतः बलरामस्य पातालप्रदेशः कुण्डलिन्याः जागृतिं सूचयति अपि च कृष्णस्य देहोत्सर्गः पराशक्तेः आरोहणं साकूतं सूचयति। इत्यलम्।।

## सन्दर्भग्रन्थः

1. शिवपुराणम् द्विचत्वारिंशत्तमेऽध्याये।

2. श्रीसूक्तम्, पञ्चमो मन्त्रः

3. खिलसूक्तम् ऋग्वेद – /11315

4. श्रीसूक्त, श्रीयन्त्र अने श्रीविद्या, डॉ. हर्षदेव माधव, श्रीयाणी अकादमी चाँदखड़। अहमदाबाद, प्रथम संस्करणम्, 2008 (गुर्जरगिरायाम्)

5. सौन्दर्यलहरी श्रीशङ्कराचार्यः (लक्ष्मीधरव्याख्या समलङ्कृता) सम्पादकः–श्री एन. एस. वेङ्कटनाथाचार्यः, प्राच्यविद्या संशोधनालयः, मैसूर विश्वविद्यालय, मैसूर चतुर्थ आवृत्ति,

6. तदेव

**डॉ. रवीन्द्रकुमार खाण्डवाला**
संस्कृतविभागः
श्री एच.के.आर्ट्स कालेज, अहमदाबाद



# भारतीय परम्परायामास्तिकस्वरूपम्

डॉ. भगीरथ मिश्रः

"अस्ति नास्ति दिष्टं मति" रिति सूत्रबलादस्ति मतिर्यस्य, नास्तिमतिर्यस्य तथा दिष्टं मतिर्यस्यासौ आस्तिकः, नास्तिको दैष्टिकश्च क्रमेण ठक् प्रत्ययान्निष्पन्नोभवति। यद्यपि एतावद् व्याख्यानमात्रेण आस्तिकपदेन आस्तिकमात्रस्य बोधो न भवति। यतो हि मम पुत्रः अस्ति इति मतिस्तु आस्तिकवत् नास्तिकेष्वपि भवितुमर्हत्येव। यदि ईश्वरः अस्ति इति मतिर्यस्य इत्याकारिका व्युत्पत्तिरत्र स्वीकृता भवेत् तर्हि नास्तिकाः वा आस्तिकाः वा सर्वे एव दार्शनिकाः ईश्वरत्वेन कमपि विशेषमवश्यमेव स्वीकुर्वन्ति।

**यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो,**

**बौद्धा बुद्ध इति प्रमाणपटवः कर्त्तेति नैयायिकाः।**

**अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः,**

**सोऽयं वो विदधातु वाञ्छति फलं त्रैलोक्यनाथो हरिः॥**

एवम्भूतः श्लोकः हनुमन्नाटकस्य प्रारम्भे एव उपलभ्यते। हनुमन्नाटकनामा ग्रन्थः हनुमत्प्रणीत इति श्रूयते। अत्र त्रैलोक्यनाथपदेन कर्म अपि उक्तं भवति। उदयनाचार्येणापि न्यायकुसुकाञ्जलौ लिखितम्...."सर्वज्ञ इति सौगताः, निरावण इति दिगम्बराः, लोकव्यवहार सिद्धइति चार्वाकाः किं बहुना यं कारवोऽपि विश्वकर्मेत्युपासते।" अस्यां स्थितौ ईश्वरोऽस्तीति मतिर्यस्य इति कथनेन आस्तिकपदेन बौद्धादीनां नास्तिकादीनां व्यावृत्ति र्न भवति। अतश्च आस्तिकपदेन एतादृशं व्याख्यानं उपयुक्तं भवेद् येन नास्तिकादीनाम् आस्तिकपदेन व्यावृत्तिः संगच्छेत। अतश्च कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थः क्षित्यङ्कुरादिकस्य, सर्वगतत्वाद् व्यापकः, नित्यः सर्वान्तर्यामी, जीवगतयोर्धर्माधर्मयोरधिष्ठातृत्वेन हृदिस्थः, ग्रहनक्षत्रादीनां अङ्गुल्यानिर्देशेन स्थापकः यः अस्ति इति मतिर्यस्य अर्थात् एतादृशो विश्वासो यस्य सएव आस्तिकपद वाच्यो

भवति, नान्यः। तथा च यथा आस्तिका ईश्वरवादिनः परलोकवादिनोऽपि न तथा नास्तिकाः। यतोहि सर्वे नास्तिका आत्मनो नित्यत्वं न स्वीकुर्वन्ति। आत्मनो नित्यत्वे एव वेदानां पुराणादीनां धर्मशास्त्रादिग्रन्थानां साफल्यं संगच्छते। यदि आत्मा नित्यो न स्यात् तर्हि जीवेन कृतस्य कर्मणः फलं नोपभुज्येत। अस्यां स्थितौ धर्मशास्त्रस्य पुराणादिकथायाश्च नैरर्थक्यं स्यात्। नहि चैत्रेण कृतस्य कर्मणः फलं मैत्रः उपभुङ्क्ते। अतएव आत्मनो नित्यत्वं अनित्यत्वञ्चाधिकृत्यैव इमे नास्तिका इमे च आस्तिका इति व्यवहारो जायते। यद्यपि वेदानाम् अंशतः प्रामाण्यं नास्तिका अपि अभ्युपगच्छन्ति। सत्यं ज्ञानमन्तं ब्रह्म इति कथचित् श्रुनिम् अंशतः स्वीकृत्य नास्तिका अपि आत्मनो ज्ञानरूपतां स्वीकृतवन्तः। योगाचारमते आत्मा ज्ञानरूपः परन्तु सः क्षणिकः। तस्य मते यत्सत् तत् क्षणिकमिति नियमरूपां व्याप्तिं स्वीकृत्य आत्मनः क्षणिकत्वं तेन प्रतिपादितम्। यद्यपि एतन्मते विज्ञानातिरिक्तं न किमपि वस्तुजातं वर्त्तते। तन्मते ज्ञानसुखादिकं तस्यैवात्मनः आकारविशेषः। आकारविशेषश्चात्र–वस्तुतः "तदभिन्नत्वे सति तद् भिन्नत्वेन प्रतीयमानत्वम्।"

शून्यवादिमाध्यमिकमते ज्ञानमेवात्मा किन्तु स आकारशून्यः। निराकारज्ञानमेव आत्मा इति कृत्वा माध्यमिकः शून्यवादी कथ्यते। सौत्रन्तिकमते ज्ञानमेवात्मा, किन्तु एतन्मते बाह्यं जगदस्ति, किन्त्वनुमेयम्। वैभाषिकमते बाह्यं जगदस्ति, किन्तु नानुमेयमपितु प्रत्यक्षभूतमेव।

उपर्युक्तकथनेन इदं सिद्धं भवति यच्चतुर्विधेषु बौद्धेषु आत्मनः नित्यता नैवास्ति, इति कृत्वा सर्वे बौद्धाः नास्तिका इति सिध्यति। अतएव परलोकः अस्ति इति मतिर्यस्य सोऽप्यास्तिक इति कथनस्यावसरो जायते। जैनदर्शनेऽपि आत्मा ज्ञानरूपः। स च नित्यः, परन्तु एतन्मते आत्मा न सर्वथा नित्यः अपितु परिणामिनित्यः, अर्थात् यथा यथा शरीरं विवर्द्धते तथा ज्ञानरूपः आत्मापि वर्द्धते। एवं यथा–यथा शरीरमपक्षीयते तथा–तथा ज्ञानरूपः आत्मापि अपक्षीयत इति क्षयापक्षयाभ्यामात्मनो नित्यत्वं आस्तिकाः नैव स्वीकुर्वन्ति। आस्तिकाः सर्वे एव पूर्वोक्तं तत्स्वरूपं स्वीकृत्य स्वात्मानं धन्यं मन्वते। एवञ्च यः एतादृशं परमेश्वरमुपास्ते स आस्तिकः कथ्यते। परमेश्वरस्य भक्तिमार्गे श्रद्धाया अतीव महत्त्वं विद्यते। यत्र श्रद्धैव नास्ति सः कथमपि आस्तिक इति वक्तुं न शक्यते। उक्तञ्च गीतायाम्–

**अश्रद्दधानाः पुरुषाः धर्मस्यास्य परन्तप।**

**अप्राप्य मां निवर्त्तन्ते मृत्युसंसारवर्त्मनि॥**

**सोऽपि मुक्तः शुभाँल् लोकान् प्राप्नुयात्पुण्यकर्मणाम्॥**

श्रद्धावशादेव भक्तिः जागर्त्ति। भक्तिमार्गस्य मूलं श्रद्धैव वर्त्तते। गुरूपनिषद्वाक्येषु विश्वासः एव श्रद्धा कथ्यते। भक्तिश्च सगुणब्रह्मविषयः मानसव्यापारः। श्रद्धा गुणानधिकृत्य प्रवर्त्तते। श्रद्धायां न तावद् व्यक्तिविशेषः कारणम्, अपितु तद्गत–गुणाः एव कारणत्वेन परिगणिताः भवन्ति। प्रेम तु व्यक्तिविशेषमधिकृत्यैव प्रवर्त्तते। तत्र गुणस्य अपेक्षा न भवति। रासपञ्चाध्याय्यामेतदभिप्रायेण प्रेम्णः महत्त्वं व्यासेन प्रादर्शि।

भगवता कृष्णेनापि आस्तिक्यस्य महत्त्वकथनव्याजेन श्लोकोऽयं स्वयमेवोक्तः–

**इदन्ते नातपस्काय नाभक्ताय कदाचन।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति।।**

अत्रायं भावः–तपस्वी सन्नपि यः अभक्तः अनुरागहीनः, तस्मै मदुक्तः उपदेशो न देयः। एवं यः तपस्वीभक्तश्च किन्तु अशुश्रूषुः, तस्मै अपि मदुक्तः उपदेशो न देयः। तपस्वी भक्तः शुश्रूषुश्च यः अस्ति किन्तु माम् अभ्यसूयति तस्मै कदापि मदुक्तः उपदेशो न देयः। ''यो माम् अभ्यसूयति'' इत्यंशमधिकृत्य मधुसूदनसरस्वतीस्वामिना–

''नास्तिक्यान्मयि मनुष्यत्वबुद्धया दोषारोपेण यो जनः मां निन्दति तस्मै मदुक्तः उपदेशो न देय'' इति भगवदभिप्रायः प्रकटीकृतः किं बहुना भगवता शंकराचार्येणापि गीताभाष्ये ''यो मामभ्यसूयति'' इत्यंशमादाय–

''मयोक्तं संसारविच्छित्तयेऽतपस्काय तपोरहिताय न वाच्यम् इति। तपस्विनेऽप्यभक्ताय गुरुदेवभक्तिरहिताय कदाचन कस्यांचिदपि अवस्थायां न वाच्यम्। भक्तः तपस्व्यपि सन्नशुश्रूषुर्यो भवति तस्मा अपि न वाच्यम्। न च यो मां वासुदेवं प्राकृतं मनुष्यं मत्वाभ्यसूयत्यात्म-प्रशंसादिदोषाध्यारोपेण ममेश्वरत्वमजानन्न सहतेऽसावप्ययोग्यस्तस्या अपि न वाच्यम्'' इति व्याख्यातम्।

परमेश्वरं प्रति श्रद्धावन्तमनुरागवन्तमास्तिकं सर्वथैव परमेश्वरो रक्षतिअनुगृह्णाति च। अनुरागः सगुणब्रह्मविषयकः मानसव्यापारः। स चिन्तनरूपः। आपत्तिकाले येन रूपेण भक्तः परमेश्वरं अनुचिन्तयति तद्रूपेणैव परमेश्वरः अनुगृहीतुं भक्तस्य शरीरं प्रविशति। उक्तञ्च तात्पर्यटीकायां वाचस्पतिमिश्रपादेन–

**''भूतावेशन्यायेन ईश्वरो भक्तशरीरं प्रविशति।''**

अत्र अपरो विचारः प्रस्तूयते–भक्तिः बहुविधा भवति। केचन भक्ताः देवव्रताः भवन्ति। ते च देवान् प्राप्नुवन्ति। केचन भक्ताः राजसाः पितृव्रताः भवन्ति। ते पितॄन् प्राप्नुवन्ति श्राद्धादिवशात्। केचन तामसा भूतव्रताः भवन्ति। ते च राक्षसादीन् प्राप्नुवन्ति। इतः परमपि भक्तो द्विविधः–सगुणब्रह्मोपासको निर्गुणोपासकश्च। तत्र सगुणोपासकस्य चित्ते अनुरागात्मिका वृत्तिर्जायते। सा च वृत्तिर्यदा निरवच्छिन्ना भवति सैव निरवच्छिन्ना भक्तिरनन्या भक्तिः कथ्यते। इतः परं या भक्तिः निर्गुणं ब्रह्म अधिकृत्य, तं प्रति योऽनुरागः स न तावद् वृत्तिविशेषः। उपाधिविशिष्टस्यैव ब्रह्मणः चित्ते वृत्तिस्वीकारात्। अत्र "निरवच्छिन्नत्वं नाम भगवच्चरणारविन्द-चिन्तायाः क्षणमात्रस्यापि कृते वियोगाभाव एव। अतएव–

**"नाहं वेदैर्न तपसा न दानेन न चेज्यया।**

**शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा॥**

**भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन।**

**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप॥**

**इति अर्जुनं प्रति भगवतः श्रीकृष्णस्योक्तिः संगच्छते।**

इदमत्राकूतम् –कर्मयोगे–भक्तियोगे–ज्ञानयोगे वा सर्वत्रैव प्रेरकत्वेन श्रद्धैव मूलकारणम्। श्रद्धावशादेव कर्मणि निष्कामे प्रवर्त्तते मानवः। यतो हि निष्कामकर्मणः न तावत् किमपि फलं भवति, अपि तु अन्तःकरणशुद्ध्यर्थमेव प्रवर्त्तते मनुष्यः। कर्म एव योगः–कर्मयोगः, स च सन्ध्योपासनादि निर्विकल्पकसमाध्यनुष्ठानरूपः। "अहरहः सन्ध्यामुपासीत" इत्यादिना वाक्येन सन्ध्योपासनादीनां नित्यकर्मत्वं प्रतिपादितम्। कर्मणि नित्यत्वं फलविशेषशून्यत्वे सति अकरणे प्रत्यवायजनकत्वम्। एवञ्च फलाभावेऽपि मानवः सन्ध्योपासनादौ अनुष्ठानादौ च यः प्रवर्त्तते स श्रद्धावशादेव। उक्तञ्च "आचार्यवचनेषु अदृष्टार्थेषु विश्वासः श्रद्धा" इति। "भ्रम-प्रमासाधारणास्तिक्यबुद्धिःविश्वासः। प्रमात्मिकास्तिक्यबुद्धिः श्रद्धा।" एवं ज्ञानार्थं युज्यत इति ज्ञानयोगः इति कथ्यते। ज्ञानयोगश्चात्र श्रवणमनननिदिध्यासनरूपः। अत्रत्यं निर्दिष्टं ज्ञानं विलक्षणं न तावत् इन्द्रियजन्यम्। "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति मन्त्रोक्तं श्रवणं श्रुतिवाक्यस्यैव। मननं चात्र अनुमानरूपमेव। उक्तञ्च–

**"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः"**

एवञ्च अविरलक्रमेण अर्थात् निरवच्छिन्नरूपेण आत्मनश्चिन्तनं निदिध्यासनम्। तेन अज्ञानस्य नाशो भवति। जीवात्मा मुक्तिं लभते। अस्मिन् ज्ञानयोगे यस्य पुरुषस्य'' तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय इति वाक्ये विश्वासः श्रद्धा वा स्यात् स एव ज्ञानयोगे प्रवर्त्तते। ज्ञानयोगस्यापि वस्तुतः श्रद्धैव मूलम्। श्रद्धाहीनः पुरुषः विद्वद्वरेण्योऽपि मुक्तिं न लभते। यथा–हिरण्यकशिपु–कंस–रावण प्रभृतिषु आस्तिक्यं व्याहन्यते। अतएव ते परमेश्वरं प्रति श्रद्धाहीनत्वादेव कुकर्मणि प्रवृत्ता आसन्। अथच तद् वशादेव आस्तिककोटौ न ते परिगणिताः।

किं बहुना श्राद्धकल्पेऽपि–

गोत्रं नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च श्रद्धा च नो मा व्यगमत् बहुदेयं च नो भवेत् .........इत्यादि।

एतन्मतं पोषयन् कविकुलचक्रवर्त्ती विशाखदत्तः मुद्राराक्षसे इत्थमभिहितवान् यत्–

**अप्राज्ञेन च कातरेण च गुणः स्याद्भक्तियुक्तेन कः**

**प्रज्ञाविक्रमशालिनोपि हि भवेत्किं भक्तिहीनात्फलम्।**

**प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये**

**ते भृत्या नृपतेः कलत्रमितरे संपत्सु चापत्सु च।।** 1/15

व्यवहारेऽपि विश्वासघातः श्रुतिमथमायाति, न खलु श्रद्धाघात इति सार्वजनीनोऽनुभवः। अतः श्रद्धावान् एवास्तिक इति सर्वजनसम्मतम्।

**डॉ. भगीरथ मिश्रः**
प्राचार्योऽध्यक्षश्च
स्नातकोत्तर दर्शन विभागः
कामेश्वर सिंह दरभंगा संस्कृत विश्वविद्यालयः,
दरभंगा (बिहार)

# मिथिलायां गीतिकाव्यपरम्परा

**डॉ. विजयचन्द्र झा**

प्रकाशितेषु काव्यतत्त्वेषु गीतितत्त्वम् अन्यतमम् मन्यते। उक्तञ्च भारतीये नाट्यशास्त्रे– 'जग्राह पाठ्यम् ऋग्वेदात् सामभ्यो गीतिमेव च।' इत्यादि।

साम्नां विशेषः स्वरो गीतिः। स स्वरोऽतीवप्रियो देवानाम् किमुत मानुषाणाम्। तदुक्तं गीतायां भगवता श्रीकृष्णेन–'वेदानां सामवेदोऽस्मि' इति।

एवं गीतिमयम्, गेयम्, गीतिप्रधानं वा काव्यं गीतिकाव्यमिति व्युत्पत्त्या लभ्यम् अर्थमादाय प्रसिद्धिसत्त्वात् विवेचनमारभ्यतेऽस्माभिः।

काव्ये रसभावयोः प्राधान्यात् काव्यं द्विविधं स्वीकर्त्तुमुचितम् –रसप्रधानं काव्यं सरसकाव्यम्, भावप्रधानञ्च काव्यम् भावकाव्यमिति। तत्र रसप्रधाने रसास्वादनाय समुचित–विभावा–नुभावादिवर्णनमपेक्ष्यते। भावप्रधाने तु ईषद्–विभावादिवर्णनमपेक्ष्यते। अतो हेतोः रसप्रधानं काव्यं बृहदाकारकं महाकाव्यादिरूपं विरच्यते, भाावप्रधानं काव्यं तु खण्डकाव्यम् एकदेशिवर्णनरूपम्। एषु खण्डकाव्येष्वेव गीतिकाव्यम् समायाति। एवं भावप्रधानं पद्यात्मकम् एकदेशानुसारि गीतिमयञ्च काव्यं गीतिकाव्यमित्यङ्गीकर्त्तुमुचितम्।

जयदेवानन्तरम् अनेकशताब्द्याः परं पञ्चदशशताब्द्यां जातः गीतगौरीपति-काव्यकर्त्ता भानुदत्तः। गीतगौरीपति--काव्ये गौरीपतेः शिवस्य भक्तिगीतानि स्तोत्राणि च प्रणीतानि कविना। विविधच्छन्दोमूलकानि राग–तालमयानि गीतानि अतीव मनोहराणि दश सर्गेषु निबद्धानि सन्ति। उक्तञ्च कविना काव्यसमाप्तौ–गौरीपतेर्गीतिरियं सुरम्या इत्यादि। उदाहरणार्थम् एका गीतिपङ्क्तिरत्र प्रस्तूयमानाऽस्ति–गुर्जरीरागेण रूपकताले–

**सकुतुकसरभससविनयसस्मितविरचितबहुविधरङ्गम्।**

**मुकुलितविकसितमुहुरावर्तितनर्तितनयनतरङ्गम्।**

**प्रियसखि किमुरसि वहसि महेशम्।**

**हिमकरकिरणकलापकरञ्जितकैरवकोमलवेषम्।।** 2/1

एवमेवात्र गीतानि विविध–राग–तालमयानि दृश्यमानानि सन्ति। वसन्तरागे रूपकतालेऽन्या गीतिर्द्रष्टव्या–

**रतिरसविकलितमणिमयनूपुरयुगलतरङ्गिततालम्।**

**फणिपतिविततफणावलिपरिहृतमणिगणविरचितजालम्।**

**सायं समयविहितनटवेषम्।**

**चेतो मम चिन्तय हि महेशम्।।** 3/1

एकमन्यदुदाहरणमपि द्रष्टव्यम् –देखाखरागेणैक–तालिताले–

**त्वमसि किरीटं त्वमसि पटीरम्।**

**त्वं सन्तापहुताशे नीरम्।**

**मनसिजलेख त्वं मम सकलम्।।** 17/1

इह कविना राग–तालोल्लेखपुरस्सराणि गीतानि निबद्धानि। यद्यपि एतानि सर्वाणि भक्तिगीतानि सन्ति किन्तु गीतिकाव्यस्य विकासायात्र बहवो मार्गा उन्मीलिता अत्र गीतिसमाप्तौ कविमणितिः प्रयुक्ता यथा विद्यापतिप्रभृति–मैथिलीगीतिकारैः प्रयुज्यमाना आसीत्। एवञ्चात्र वसन्तादिप्रकृतिमनुसृत्य विविधदेशीयताल–लयमनुसृत्य गीतानि रचितानि। एतानि तत्त्वानि परवर्त्तिनां गीतिकाराणां प्रेरकाणि जातानि। प्रायेण गीतिकाव्यस्य भक्तिगीति प्रकृतिगीति, राष्ट्रगीति राजभक्ति–गीति (वीरुत् इति), शृंगारगीति, विरहगीति इत्यादि प्रविभागाः विकसिताः सञ्जाताः।

भक्तिगीतिपरम्परायामेव जातः बालकवि-कृष्णदत्तः गीतगोपीपतिः काव्यकर्त्ता। अस्य समयः अष्टादशशताब्द्यां प्रतिपाद्यते। अस्मिन् गीतगोपीपतिः काव्ये गीतगोविन्द' मिव राधा–कृष्णयोः प्रेमवर्णनम् मधुरमयम् पनिबद्धम्।

एवमेव भगवद्भक्तिगीतिपरम्पराया कविशेखरबदरीनाथझा आविर्बभूव। अस्य समयः

20 शताब्द्या समापतति। अनेन संस्कृतगीतिरत्नावली विरचिता।

गीतिकाव्यस्यन्यप्रविभागे राजभक्ति (वीरुत्) गीतिकाव्ये कविना प्रायेण स्वाश्रयस्य राज्ञो वीरगाथा निबद्ध्यते। महामहो. गोकुलनाथोपाध्यायेन स्वाश्रयदातुः श्रीनगराधीशस्य फतेहसाहस्य गुणानां गानं हरिगीतिकावृत्ते कृतम्, यथा–

**त्वयि चलति सङ्गरभूमिसीमनि भूमिसीमशरासने**
**वद को न मुञ्चति दम्भमथवा को न तिष्ठति शासने।**

एवमेव मदनहरावृत्ते–

**लघुतरपदपाता जवजितवाता पुर इव जाता।**
**पतगपते दीनैकगते इत्यादि च।**

तत्र विरुदावली संकलनात्मिकाऽस्मद्गुरुचरण डॉ. त्रिलोकनाथझासम्पादिता खण्डवलाराजविरुदावली सम्प्रति मुद्रिता। अस्याम् अनेकेषां कवीनाम् वीरुद्गानानि विलसन्ति। अस्यां त्रिशतोऽप्यधिकानां वीरुत्काराणां रचना संकलिताऽस्ति। तत्र केषाञ्चन वीरुद्गानानि उल्लेख्यानि, अन्यानि च काव्यानि न पुनः गीतकानि। एषु चित्रकवेः माधवविरुदावली, नारायणकवेः राघवविरुदावली, अज्ञातनाम्नः कवेः सुन्दरविरुदावली प्रमुखानि सन्ति। एभ्यः कानिचन उदाहरणानि प्रस्तूयन्ते–

राघवविरुदावल्याम्–

**त्वयि चलति विजेतुं भुवनमसेतुं निन्दन्तं सरितं परितः।**
**परिहृतशिशुदारा भुक्ताहारा निविशन्ते रिपवो विपिनम्।**

माधवविररुदावल्याम्–

**गिरितुङ्गमतङ्गजवृन्दविनिन्दित–**
**तुन्दिलदिग्गजकायतते सुजनैकगते।**
**प्रविनम्रसबालमहीपतिसभाल–**
**किरीटकृताघ्रिनते मिथिलाधिपते।।**

सुन्दरविरुदावल्याम्–

**जय नयकारक खलदलहारक**
**हारकलितमिथिलाधिपते हतवैरितते।**

**शरणागतपालक सुतशतलालक**

**भालवलितवरहीरतते जयभूमिपते।।**

आधुनिकेषु गीतिकाव्येषु विविधप्रकाराणि गीतिकाव्यानि कर्त्तुं प्रयत्नः परिलक्ष्यते। तत्र पण्डित–आनन्दझाद्वारा आनन्दमधु–मन्दाकिनी तदीयगीतिकाव्यसंग्रहात्मिका प्रणीता। अस्याम् भक्तिगीति, प्रकृतिगीति, राष्ट्रगीति, राजस्तुतिगीति इति प्रकीर्णगीतयः विलसन्ति। उदाहरणम्– अभियानगानम्–

**व्रज त्वमद्य सत्वरं चल त्वमद्य सत्वरम्।**

**धीर वीर सैनिक व्रज त्वमद्य सत्वरम्।।**

शान्तिगीतिः–

**परा शान्ते देवता त्वम्।**

**निखिलविश्वस्यैकता त्वम्।।**

एवमेवाचार्यरामचन्द्रमिश्रमहाभागेन काश्चिद् गीतयः ग्रथिताः। तत्रैकमुदाहरणम्, यथा– काश्मीराक्रमणम्–

**येन भूमण्डलेन स्वखण्डने देशोऽस्मदीयो दिवं सुन्दरीं निन्दति,**

**शारदादेशमास्थापयत्केशरं काव्यरूपं सदा सौरभं निन्दति।**

अयं महानुभावः सीतामढ़ीमण्डलान्तर्गतपकड़ी-ग्रामनिवासी वैदेहीचरित-महाकाव्यप्रणेता 20 शताब्द्यां विद्यमानः आसीत्।

अस्यामेव परम्परायां पं. जीवनाथमहाभागेन काव्यलहरी-ग्रन्थे प्रकीर्णकाव्यानि संग्रथितानि। एषु काश्चन गीतयः यथा स्वागतगीतिः अभिनन्दनगीतिः विलसति यथा–

स्वागतगानम्–

**प्रभो भज भूरि–भूरि विजयम्।**

**भाग्यरवेरिह नः पश्यामो धुरि साम्प्रतमुदयम्। प्रभो.।**

**सकलनृपालैराद्रियमाणं गुणगणगौरवमाश्रियमाणम्।**

**त्वामासाद्य वयं बिभरामः परमं प्रीतिचयम्। प्रभो.।**

भक्तिगानं यथा–

**त्रिभुवनपते नाथ जय जय पुरारे।**

**स्वीकृतगरलपान प्रियवृद्धवृषभयान।**

**शशधरविलसमान जय जय पुरारे।।** इति।

अयं जीवनाथः महावैयाकरणदीनबन्धुसुतः 20 शताब्द्यामवर्तत महाराजाधिराजकामेश्वर-सिंहस्याश्रये। अनेन कामेश्वरप्रतापोदयम् वीरुत्काव्यमपि लिखितम्। अस्येयं काव्यलहरी अधुना यावत् अप्रकाशितैव तिष्ठति।

साम्प्रतिकेषु [illegible] आचार्यरामजीठक्कुरः विविधगीतिरचनाकारः परिचितोऽस्माकम्। अनेन राष्ट्रगीतिः प्रकृतिगीतिः, प्रकीर्णगीतयश्च ग्रथिताः प्रकाशनमपेक्षन्ते। अस्य आर्याविलासनामकं मुक्तकं गीतिमयं मम दृग्गोचरीभूतम्। तत उदाहरणार्थम् प्रस्तूयते–आर्याविलासस्य पद्यद्वयम्–

**जयति जवाहरलालः भारतभूमेर्विमुक्तिहेतोर्यः।**

**कमलामिव निजकमलां विहाय देशार्थमाददे विपदम्।।**

**भारतवीरसुपुत्रं गुर्जरतिलकं स्वदेशसम्मानम्।**

**बल्लभपटेलविदितं स्मरामि सत्यव्रतं महात्मानम्।।**

एवं मिथिलायां गीतिकाव्यस्य निरवच्छिन्ना परम्परा दरीदृश्यते। अस्या विकाशश्च बहुमुखोऽवलोक्यते। आशासे कविभिरियं परम्परा अग्रेऽपि सारयिष्यते विकासस्य च क्रमो न व्याहन्येत इत्यलम्।

## सन्दर्भग्रन्थाः


1. भानुदत्तग्रन्थावली–भानुदत्त
2. एकावली–म.म. गोकुलनाथ
3. आनन्दमधुमन्दाकिनी–पं. आनन्दझा
4. काव्यलहरी–पं. जीवनाथझा

5. काव्यकल्लोलिनी–कविशेखरबदरीनाथझा
6. आर्याविलासः–डॉ.रामजीठाकुर
7. दीनबन्धुस्मृतिग्रन्थः
8. खण्डवलाराजविरुदावली–डॉ.त्रिलोकनाथ झा
9. संस्कृतसाहित्येतिहासः–आर्चाबलदेव उपाध्यायः
10. संस्कृतसाहित्येतिहासः–आचार्यवाचस्पति गैरोला
11. The Glory that was mithila–Dr. Triloknath jha

**डॉ. विजयचन्द्र झा**
प्राध्यापक,
ल.प्रि.रा.ल.संस्कृतमहाविद्यालय,
समौल, मधुबनी

# श्रीमद्भगवद्गीतायां प्रयुक्तानां सम्बोधनपदानामौचित्यम्

डॉ. अरविन्दकुमारतिवारी

श्रीमद्भगवत्कृष्णमुखारविन्दनिस्सृतगीता सकलमानुषकल्मषहारिणी गङ्गेव निखिलजनमनःपावनी तीर्थभूमिरिव सर्वधर्मसम्भावहृदया भगवन्मायेव सकृदपि पठतो मनुजान् कृतार्थयन्ती भारतवर्षगरिमाणं रक्षयन्ती विद्योतमानास्ति सौदामनीवेह जगति न कं मोहयति जगदान्धकारावच्छिन्नजनं मार्गं दर्शयन्ती मोचयति। जानन्ति प्रेक्षावन्तो विद्वांसः श्रोतारो मन्तारश्च यदियं श्रीमद्भवगद्गीताहवेऽर्जुनाय प्रोक्ता मोहोपहितचेतसे मोहापहितचेतसा श्रीकृष्णेन महाभारते। अये विमर्शनशीलविशालबुद्धयो बुद्धिमत्स्वपि यदि वक्ता स्वयं भगवान् श्रीकृष्णः श्रोता चार्जुनस्तदा प्रतिपदं सार्थकमेव मन्तव्यं वार्त्तालापीयमिति चिन्तयामि, तत्रापि वर्णसंयोजकः श्रीमान् व्यासस्तर्हि सर्वमपि समुपादेयमेव न लेशमात्रमपि परिहेयमित्यनुमिनोमि सनातनमार्गानुसारी। बहुधा प्रतिरविवासरं मालवीयभवने मनीषिणां गीताप्रवचनं श्रोतुमुपस्थित एकाग्रचितेन यत्किमप्यश्रौषं तेन हृदये महानानन्दोऽजायत, तदानीमेव विचारितमासीन्मया यत्सम्बोधनपदमाश्रित्य निबन्धो लेखनीयः सम्प्रति लिखितः।

श्रीमद्भवगद्गीतायामेकविंशत्युत्तरद्विशतसम्बोधनपदानि प्राप्तानि प्रायशः। तानि सन्तीमानि– सञ्जय 1, आचार्य 1, द्विजोत्तम 1, अच्युत 3, अनन्त 1, अनन्तरूप 1, केशव 8, मधुसूदन 4, जनार्दन 5, वार्ष्णेय 1, अर्जुन 19, पार्थ 27, परन्तप 10, अरिसूदन 1, भारत 21, कौन्तये 23, पुरुषव्याघ्र 1, पुरुषर्षभ 2, महाबाहो 14, कुरुनन्दन 3, धनञ्जय 8, अनघ 2 (अर्जुनाय), कुरुसत्तम 1, कुरुप्रवीर 1, केशिनिषूदन 1, पाण्डव 5, तात 1, भरतसत्तम 1, भरतश्रेष्ठ 1, भरतभ 5, पुरुषोत्तम 3, भूतभावन 1, भूतेश 1, देवदेव 1, देव 1, देवेश 1, देववर 1, जगत्पते 1, जगन्निवास 3, भगवन् 1, कुरुश्रेष्ठ 1, गुडाकेश 2, कमलपत्राक्ष 1, परमेश्वर 1, प्रभो 1, योगेश्वर 1, राजन् 3, विश्वेश्वर 1, विश्वरूप 1, महात्मन् 1, विष्णो 2, सव्यसाचिन् 1, हृषीकेश 2, यादव 1, सखे 1, अप्रतिमप्रभाव 1, सहस्रबाहो 1, विश्वमूर्ते 1, महीपते 1, गोविन्द1

एतेषु सम्बोधनपदेषु श्रीकृष्णम्प्रति अच्युताऽनन्ताऽनन्तरूपाऽप्रतिमप्रभाव–केशव–कृष्ण–मधुसूदनारिसूदन–जनार्दन–माधव–वार्ष्णेय–महाबाहु–पुरुषोत्तम–भूतभावन–भूतेश–देवदेव–देव–देववर-देवेश–जगन्निवास–जगत्पति–भगवत्–कमलपत्राक्ष–परमेश्वर–प्रभु–योगेश्वर–विश्वेश्वर–विश्वमूर्ति–केशिनिषूदन–विश्वरूप–महात्म–हृषीकेश–यादव–सखि–सहस्रबाहु–गोविन्दपदानि षट्त्रिंशत्प्रकारकाणि प्रयुक्तानि प्राप्तानि।

अर्जुनम्प्रति अर्जुन–पार्थ–परन्तप–भारत–कौन्तेय–भरतश्रेष्ठ–कुरुनन्दन–कुरुप्रवीर–कुरुसत्तम–कुरुश्रेष्ठ–धनञ्जयानघ–पाण्डव–गुडाकेश–सव्यसाचि–पुरुषव्याघ्र–पुरुषर्षभसम्बोधनपदानि दृष्टानि सप्तदशप्रकारकाणि।

द्रोणाचार्यम्प्रति आचार्य–द्विजोत्तमसम्बोधनपदद्वयं प्रयुक्तमस्ति।

सञ्जयं प्रति सञ्जयसम्बोधनपदमेकमेवोक्तम्।

धृतराष्ट्रं प्रति भारत–राज–परन्तप–महीपतिसम्बोधनपदानां चतुष्टयं प्रयुक्तमस्तीति लभ्यते।

यद्यपि प्रकारत्वेन सर्वाधिकं सम्बोधनपदं भगवतः श्रीकृष्णस्यैव दृश्यते तथापि सङ्ख्यादृष्ट्यार्जुनस्य सर्वाधिकानि प्राप्तानि। इमानि सर्वाण्यपि साभिप्रायसूचकानि यथावसरं यथाकालं प्रयुक्तानि दृष्टानि सार्थकान्येव। नैकमपि सम्बोधनपदं मया व्यर्थमालक्षितम्। अधुनादौ भगवन्तं प्रति प्रयुक्तसम्बोधनपदानामौचित्यं प्रदश्र्यते।

श्रीमद्भगवद्गीतायां प्रथमं सम्बोधनपदं 'सञ्जय'[1] इति वर्तते। पदमिदं गीतापाठकानामवधानताधायकं मन्तव्यं सावधानस्यैव ज्ञानग्राहकत्वात्, निरवधानस्तु विवेच्यग्राह्यज्ञानाद् भवति दूरमिति सर्वविदितम्। द्वितीयं पदं सम्बोधनं 'आचार्य'[2] तृतीयं 'द्विजोत्तम'[3] इत्यस्ति। अत्र ज्ञेयं यत् यावन्नारभ्यतेऽर्जुनकृष्णसंवादस्तावद् गीताया पीठिकाभागः कथन्न मन्यन्तामिति। वस्तुतो गीतारम्भस्तु 'सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत!।'[4] इति कथनात्स्वीकरणीयः। अतो धनुर्धरोऽपि धर्मधुरीणः, शस्त्रप्रवीणोऽपि शास्त्रकुशलो न विस्मरति मङ्गलवचनाचरणम्। अस्मादेव कारणात्प्रथमन्तेन 'अच्युत' सम्बोधनं प्रयुक्तम्। यथोक्तं मङ्गलविषय यत् 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्ति, आयुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति।[5] जनैरहमुपहास्यतां गतो युद्धक्षेत्रे किमर्थं मङ्गलं कारणीयमिति विमृशन्। मङ्लन्तु ग्रन्थप्रणयने आचर्य्यते। अये मान्याः। अर्जुनोऽपि विलिखन्नस्ति स्वरणकौशललेखन्या विशालेतिहासरूपात्मकं महाभारतम्, अतस्तेनाचरितं मङ्गलमिदम्। द्वितीयमच्यु-

तसम्बोधनपदमेकादशाध्याये 'विहारशय्यासनभोजनेषु[6] प्रमादात् त्वं मया कदाचिदसत्कृतोऽसि, अपमानितः सन्नपि न त्वया स्वस्वरूपात् प्रच्यवितव्यमिति त्वयि अच्युतत्वमौचित्वमेव भजते, तस्मात्तवमच्युतोऽसि। एवं भवति लोके कदाचित्कुपितं मित्रं गुह्यमपि प्रकाशयति यदपमानितं मित्रं मैत्रीं भिनत्ति हृदि वैरं पालयति च, परन्तु त्वन्तु जानासीदं समग्रमपि विस्मृत्य सखायं मनुसे माम्। अतस्त्वमच्युतो मन्यत इत्यपि मत्वार्जुनेन अच्युतसम्बोधनं प्रयुक्तमिदं माध्यमिकं मङ्गलं मन्यतामिति। तृतीयमच्युतसम्बोधनमन्तिमे भागे गीताया अष्टादशाध्याये चतुरतया प्रयुक्तमवाप्यते। उपदेशाधिगमे स्वस्मृतिमापन्नोऽर्जुनो नष्टमोहो स्थितस्सन्नापगतसन्देहो भगवन्तं श्रीकृष्णं सम्बोधयन् दर्शयति यद् यस्यां कस्यामपि परिस्थितौ त्वं स्वस्वरूपावस्थितो न मां हास्यसीति। अच्युतपदमीश्वरवाचकमपि सर्वज्ञातम्। अतः आरम्भे मध्येऽवसाने चार्जुनेन मङ्गलाचरणरूपात्मकमच्युतसम्बोधनं व्यधायि।

केशवसम्बोधनं[7] विमृश्यते, प्रशस्ताः केशा यस्यासौ केशवः, किमर्थमात्मकल्याणभिपश्यन्नर्जुनः सुहृदं केशवं ब्रूते! चिन्त्यतां मन्ये त्वं मधुराधिपतिरसि, त्वं सर्वसुन्दरस्सन् केशान् प्रसाधयितुं मया बहुधालक्षितोऽसि। अहं चिन्तितस्तिष्ठामि प्रतिपलं मम सर्वाः क्रियाः सूत्रवद् भवन्ति, परन्तु त्वं चिन्तारहितः सन् केशान् सज्जयसि न सम्यङ्मन्त्रयसे इति पूर्वमहमनेकवारमपश्यं त्वन्मित्रभूतत्वात्, तस्माद्धे केशव! इदानीमहं सङ्कटापन्न इति त्वं जानासि, सर्वाण्यपि लक्षणानि वैपरीत्यं भजन्ते। अहमात्मकल्याणं न पश्यामि युद्धेऽस्मिन् इति त्वं जानीहि। अन्यच्च लोके सखा स्वमित्रं प्रति तद्वेशभूषागुणरूपादिभिरपि सम्बोध्यमानो दृश्यत एव। अतस्तद्वदेवात्रापि स्वीकर्तव्यम्।

कृष्णसम्बोधनपदमधुना विचार्यते–कृष्धातोर्नक्प्रत्यये कृष्णशब्दो निष्पद्यते। किञ्च कृष्वादि-परस्मैपदधातोरपि नक्प्रत्यये निष्पन्नोऽयं कृष्णशब्दश्श्यामो वर्णः स्वीक्रियते। किञ्चाकर्षति सर्वानसौ कृष्ण इत्यपि कथन्नाङ्गीकरणीयम्। श्रीमद्भगवद्गीतायामष्टौ कृष्णसम्बोधनपदानि प्रयुक्तानि। प्रथमं 'न काङ्क्षे विजयं कृष्ण! न च राज्यं सुखानि च।'[8] अत्र प्रयुक्तं कृष्णसम्बोधनपदं सर्वथौचित्यं भजते, विजयराज्यसुखानि सर्वानपि जीवानाकर्षन्त्येव, तदप्राप्तौ चानिष्टमपि कारयन्ति, परन्तु नामहर्जुन एभिराकृष्टो भविष्यामि। यद्यपि त्वमपि अखिलानकार्षसि तथापि नाहं त्वद्वचोभिरधुना येन केनापि प्रकारेणाकर्षितो भविष्यामीति ज्ञायताम्। 'एवमधर्माभिभवात्कृष्ण! प्रदुष्यन्ति कुलस्त्रियः'[9] इति स्थाने अधर्मस्याकर्षणत्वं सर्वज्ञातं कुलक्षये समुत्पन्नोऽधर्मो वर्णसङ्करत्वं जनयिष्यतीति, नाहन्तुं मधुरवाक्याकृष्टो युद्धं करिष्य इति ध्वनयति। एवमेव प्रकारेण यत्र[10] कुत्रापि कृष्णसम्बोधनपदं श्रुतं पठितं तत्र–तत्रेदमेव कदाचिन्मनो मे पश्यति।

माधवसम्बोधनं परिशील्यते–अहो! अवलोकनीयमिदं पदं 'तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान्। स्वजनं हि कथं हत्वा सुखिनः स्यां माधव!।।'[11] अविद्योपहितचैतन्यौतन्योऽर्जुनोऽ-विद्यापतिं माधवं सम्बोधयन् ब्रवीति यन्मायाया धव इति माधवः। अये माधव! अत्र मां स्वजनमोहो बाधमानोऽस्ति। त्वमेव मायाया अविद्यायाः स्वामी वर्तसे, अज्ञाननिकेतनं मां बोधयेति। माधवसम्बोधनपदमेकवारमेव श्रीमद्भगवद्गीतायां प्रयुक्तमित्यनेनापि मायापतिरेक एव न बहव इति सूचितम्।

मधुसूदनारिसूदनसम्बोधनपदद्वयपि सर्वथौचित्यपरमेव 'कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन! इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन!।।'[12] मधुनामको दैत्यस्त्वया मारितो न कश्चित्पूजनीयो हतस्त्वयेति। शत्रवो मार्यन्ते न पूज्याः, दोषा वाच्या गुरोपि यद्यपि सर्वज्ञातं वचनन्तथापि वाच्या न मारणीया, यदि मारणीयास्तत्रापि इषुभिः! नाहमिदं स्वीकरोमि। अतएव सम्बोधनद्वयमत्र वक्तव्यसावेक्षं समुचितं प्रतिभाति।

वार्ष्णेयसम्बोधनमर्जुनेन वर्णसङ्करसम्भावनावसरे प्रयुक्तम्। अत्र वर्णसङ्करेण कुलनाशो भविष्यति। यन्न मे रोचते। त्वमसि वृष्णिवंशोद्भवः। अतः स्त्रीषु दोषो मा गच्छेत् पितरश्च विलुप्तपिण्डोदकक्रिया न भवेयुरेतदर्थं मया वंशरक्षा चिन्तनीया। वृष्णौ भवः वार्ष्णेय इति पदस्य सार्थकतावश्यमेव मन्तव्या। यद्यपि स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः।[13] इत्यत्र स्त्रीषु दुष्टासु हे कृष्ण! जायते वर्णसङ्करः। इति क्रियतां न तथापि कापि क्षतिः, परन्तु वार्ष्णेयपदप्रयोगेण वंशसूचनवैशिष्ट्यं न बोधयितुं शक्यते कृष्णपदेन। वार्ष्णेयपदं कुलनैरन्तर्याभिव्यञ्जकं न तु व्यक्तिमात्राभिधायकम्।

गोविन्दसम्बोधनपदमर्जुन एकमारमेव गीतायामकरोत्, यस्याभिप्रायो मम मते वर्तते यदर्जुने आत्मनः इन्द्रियाणां वशीत्वं दर्शयति 'किन्नो राज्येन गोविन्द किं भोगैर्जीवितेन वा।'[14] गोविन्दपदस्येन्द्रियाध्यक्ष इत्यर्थोऽपि मन्तुं शक्यते। इन्द्रियनिग्रहावसरे इन्द्रियनिग्रहरूपसम्बो-धनं कथं नौचित्यं प्रकटयित। एवम्प्रकारेणान्यान्यपि श्रीकृष्णम्प्रति प्रयुक्तानि सम्बोधनपदानि सर्वथा समुचितान्येवाभान्ति।

अधुनार्जुनम्प्रति श्रीकृष्णकथितानि सम्बोधनपदानि विविच्यन्ते।

श्रीकृष्णेन श्रीमद्भगवद्गीतायां सर्वप्रथमम् अर्जुन[15] इति सम्बोधनं प्रयुक्तमित्यवलोक्यते। साभिप्रायमिदं पदम् अर्जुनशब्दस्य सर्वशुक्लवाचकत्वात्। शुक्ले वर्णे लाञ्छनाभावो मतः। अतस्त्वमुर्जुनस्त्वयि कलङ्काः कथमुपस्थिताः? अनेन सार्थकमिदं सम्बोधनम्।

द्वितीयं सम्बोधनपदं भगवता 'पार्थ'[16] इति प्रयुक्तम्। पृथायाः पुत्रः पृथाशब्देऽपत्ययार्थेऽणि कृते निष्पन्नः पार्थशब्दो मातृपक्षं समुद्घोषयति। मन्मतमिदं यदिदमुक्त्वा सूचयति भगवान् यत् अर्जुन मा भव नपुंसकोऽधुना त्वमाहवेऽस्मिन्। न जानासि ते जन्मदात्री कियद् दुःखमनुभूतवती, कियतीं पीडाञ्च सोढवती। साम्प्रतमपि प्रतिपलं सहमाना वर्तते। अतस्त्वमनुचितं मा कुरु। लोकेऽपि श्रूयते कश्चिद् वदति कमपि प्रेरयन् यस्मिन् कस्मिन् प्रतिज्ञातकर्मणि यदि त्वं निजमातृदुग्धमपिबस्तदा योद्धव्यम्। ततो मातृशब्दश्रवणोद्विग्नस्तत्कालमेव योद्धुं प्रवर्तते कलहावसर इति सुप्रसिद्धमेव।

[17]कौन्तेयसम्बोधनपदमिह चतुर्थं विमृश्यते, सरहस्यं सप्रयोजनं प्रयुक्तमिदं विलक्षणं सम्बोधनं पार्थसम्बोधनवदस्ति। कुन्तीशब्दादपत्यार्थे ढकि निष्पन्नोऽयं कौन्तेयो मातृजनितदुःखाभिव्यञ्जनतत्परः। युद्धविरतमर्जुनं युद्धाय शाब्दीभावनया प्रवर्तयितुमयमेवैकोपायः समुचित इति बहुधा प्रयुक्तमिदं पदं भगवता।

[18]परन्तपसम्बोधनपदं भगवता यथोचितमाविष्कृतमिह परिशील्यते–परं शत्रुं द्विषं वा तापयतीति परन्तपः, अर्थात् हे अर्जुन! असह्यं सहसे कठिनं कार्यं सरलतया कुरुषे, शत्रून् रणक्षेत्रे पातयसि, परन्तु हृदयदुर्बलतया पराजितो जातः कथम्? इदं तुच्छं हृदयदौर्बल्यं त्वया त्यक्त्वा सद्य एवोत्थातव्यमिति। परन्तपसम्बोधनपदेन बोध्यते। तस्मादस्य सार्थक्यमौचित्यञ्च।

भारतसम्बोधपदेन वंशगौरवं व्यनक्ति भगवान्। भरतशब्दादणि भारतशब्दो निष्पन्नः। यत्रापि प्रयुक्तमिदं पदं तत्र-तत्र भरतवंशीयराज्ञां वशांस्येव सारगर्भिततया गीतानि। भीष्मादयो भरतवंशोद्भवा ये आजीवनमखण्डब्रह्मचर्यव्रतमपालयन्। इमान् स्मर पश्य महापुरुषान्। एकस्त्वमसि यच्छीतोष्णसुखदुःखदान् मात्रास्पर्शाननित्यानुत्पत्तिविनाशशीलान् तापानमसमर्थोऽसि सोढुम्। अनेन प्रकारेण कुरुप्रवीर[19]–कुरुनन्दन[20]–कुरुसत्तम[21]–कुरुक्षेष्ठ[22]–भरतर्षभ[23] भरतश्रेष्ठ[24]–भरतसत्तम[25]–पुरुषव्याघ्र[26]–पुरुषर्षभ[27] सम्बोधनपदानि यथावसरं प्रयुक्तानि अनुसन्धेयानि। एषां पदानां प्रयोगेण 'कुलं वृत्तेन रक्ष्यते' इति बोधितम्। त्वमेव कुरुवंशरक्षकोऽसि तस्माद्धर्मयुद्धं कुरुष्व। ननूपस्थितेष्वपि भीष्मादिषु कथमर्जुनः कुरुसत्तम इति प्रोच्यते। कुरुषु ये सज्जनास्तेष्वन्यतमः इति कुरुसत्तमः। न भीष्मादीनां भगवतो मित्रत्वभाग्योपलब्धिः केवलमर्जुनस्यैव तस्मादिदं सार्थकमुचितञ्चेति कथन्न मननीयम्।

[28]धनञ्जयसम्बोधनपदेनाभिव्यञ्जितं यदनलः सङ्गं सम्पर्कमागतं वस्तु ज्वालयति तथैव त्वमपि सङ्गं विषयासक्तिं ज्वालय, नाशय। किञ्च ज्वलन् धनञ्जयः समत्वामचरति कथमित्युच्यते। ग्रामे नगरे वा समुत्थितो धनञ्जयो न गणयति जनं तत्सामर्थ्यम्, सर्वानेव ज्वालयित्वा

*************************************************************************

भस्मसात्कुरुते, तथैव सिद्धिविषये समत्वमाचर। अन्योऽपि अर्थोङ्गीकरणीयोऽस्य धनञ्जयसम्बोधनपदस्य। धनञ्जयत्यसौ धनञ्जयः। त्वत्कृते यश एवं धनं तस्मात्त्वं यशोधनः, अर्थात्त्वं यशस्वी जेतासि रणे सपत्नानिति सर्वमालोच्य युद्धं कुर्विति।

[29]पाण्डवसम्बोधनं श्रीमद्भगवद्गीतायां पञ्चवारमेव प्रयुक्तम्। यथा–यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव!।। अत्र पाण्डुशब्दादपत्यार्थे कृतेऽणि पाण्डवशब्दो निष्पद्यते। अनेन बोधयति भगवान् यत्ते पिता पाण्डुरज्ञानजन्यमोहमपुगतः शापेनास्तङ्गमितरतिसुखो मृत्युङ्गतः, परन्तु न त्वं तादृशो भवाज्ञानशरणं गच्छेति भावः। किञ्च लोके श्रूयतेऽयोग्यपितृनाम्नापि पुत्र आकार्यते। न पाण्डुर्विख्यातो निजेन कर्मणेति धिया कदाचित्प्रोक्तवान् भगवान् स्यादिति।

[30]गुडाकेशसम्बोधनं द्विवारं प्रयुक्तं भगवता श्रीकृष्णेन। कुडाका नाम निद्रा तां जयति योऽसौ गुडाकेशः। निद्रा तन्द्रा वा तमोगुणाधिक्यादाविर्भवति। अत्र भगवान् बोधयितुमीहते यत् त्वं सर्वथा सत्त्वसम्पन्नो भव न तमोगुणोपेत इति। किञ्च न कोऽपि त्वत्समानो यो जयेन्निद्राम्। सर्वे जन्तवो निद्रावशीभूताश्शेरत एव। परन्तु त्वां सर्वशक्तिमतीं तां निद्रामपि विजितवानसि तथापि युद्धक्षेत्रं प्रविश्य तमोगुणोद्भूतमाययान्यथा कर्तुमिच्छसि। अतस्त्वं विसृज्यं सशरं चापं शोकसंविग्नमानसस्सन्नधुना रथमुपविश्यानुचितं कथं कुरुषे?

[31]सव्यसाचिसम्बोधनपदमिदं निमित्तमात्रत्वसाधने भगवता प्रयुक्तं, तेनोक्तं यत् कौरवा मयैवेते मारिताः पूर्वमेव, त्वं केवलं सव्येनापि हस्तेन शरान् चालयसि चेदिमे मृता मरिष्यन्त एव। अतो वामहस्तेन शरचालकः सव्यसाची शब्दः सव्यसाचिन् सम्बोधने सार्थकमस्ति।

[32]अनघसम्बोधनपदस्यार्थो निष्पापो भवति, सर्वथौचित्यमार्गगामी भगवान् जानाति यत् ज्ञानयोगं कर्मयोगं चोभावपि रागद्वेषादिरूपाज्ञानावच्छिन्नहृदय एव विगतकल्मषोऽधिगन्तुमर्हति। तस्मादवसरेऽस्मिन्नघपदं प्रयुक्तमवलोक्यते। किञ्च योगविषयं स एव हि ज्ञातुं शक्नोति यो भवेत्पापवृत्तिशून्यः। अन्यच्च न त्वं मारयिता कौरवान् तस्मात्त्वमनघोऽसि ततः सार्थकमिदं सम्बोधनम्।

[33]आचार्यसम्बोधनपदमेकवारं दुर्योधनेन द्रोणाचार्यम्प्रति प्रयुक्तम्। अत्र पदमिदं व्यङ्गनिष्ठं प्रतिभाति मध्यमपुरुषैकवचनक्रियाप्रयोगात्। यथा–पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्। व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता।। अत्रापरमपि तवेतिपदं गुरुजनविरुद्धमिति मन्ये। अतोऽत्रासौ दुर्योधनः पाण्डवसैन्यबलदर्शनभीतिमान् सन्नेवाचार्यसम्बोधनं प्रयुक्तवान्। अन्यथा–पश्यतु पाण्डुपुत्राणामाचार्य महतीं चमूम्। व्यूढां द्रुपदपुत्रेण भवच्छिष्येण धीमता। वक्तव्यमासीत्। अनेनैव गुरोरादरो दर्श्यते। न तु 'ते' तव पदप्रयोगेण गुरोः सम्मानो भवति।

[34]द्विजोत्तमसम्बोधनपदद्वारासौ कुबुद्धिर्मन्दमतिर्दुर्योधनो मध्यमपुरुषैकवचनान्तां क्रियां प्रयुङ्क्ते, 'निबोधत'। अत्रैव 'ते' पदमपि कथितम्। यथा–अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम। नायका मम सैन्यस्य सञ्ज्ञार्थं तान् ब्रवीमि ते।। अन्यथा

अस्माकं तु विशिष्टा ये तान् बोधतु द्विजोत्तमा। नायका मम सैन्यस्य सञ्ज्ञार्थं तान् ब्रवीम्यहम्।। सन्निकृष्टेऽभिमुखे 'द्विजोत्तम' किञ्च 'ते' पदप्रयोगोऽनुचितो न प्रतीयतेऽन्धेनापि इति।

[35]महीपते सम्बोधनं विचारणीयमस्ति। यद्यपि धृतराष्ट्रं प्रति सञ्जयप्रयुक्तं तथापि धृतराष्ट्रो न महीपतिः तस्य पृथ्व्या एकदेशाधिपतेः। पदमिदन्तु मम मत्यार्जुनेन कदाचित् वराहावतारे महीरक्षणतया विष्णोरवतारश्रीकृष्णम्प्रति प्रयुक्तं स्यादिति वदामि। श्रीकृष्णस्यैव महीपतिवाचकत्वात्।

[36]राजन् सम्बोधनं सञ्जयेन धृतराष्ट्रम्प्रति प्रयुक्तम्, स एव धृतं राष्ट्रं येन विग्रहवानिति। वारत्रयं राजन् पदप्रयोगात् स्पष्टीभूतं यन्महीपते सम्बोधनं न सञ्जयो धृतराष्ट्रं प्रति अपितु अर्जुनः श्रीकृष्णम्प्रति प्रयुक्तवानासीदिति।

## सन्दर्भग्रन्थ


1. श्रीमद्भगवद्गीतायां 1–1
2. तत्रैव 1–2
3. तत्रैव 1–7
4. तत्रैव 1–21
5. व्याकरणमहाभाष्यपस्पशाह्निके।
6. श्रीमद्भगवद्गीतायां 11–42
7. तत्रैव 1–31, 2–54, 3–1, 10–14
8. तत्रैव 1–32
9. तत्रैव –41
10. तत्रैव 5–1, 6–34,37,39, 11–41, 17–1
11. तत्रैव 1–37
12. तत्रैव 2–4 (मधुसूदनप्रयोगः 1–35, 2–4, 6–33, 8–2)
13. तत्रैव 1–41

14. तत्रैव 1–32

15. तत्रैव 1–28,2–2,2–45,3–7,4–5,9,37, 6–16,32,46, 7–16,26 8–16,27, 10–32,39,42, 11–54 18–9,61

16. तत्रैव 1–25,2–3,32,39,55,72, 3–6,22,23,6–40,7–1,8–8,1419,22,27,9–12,32,11–5,17–26,28,

17. तत्रैव 2–14,37,60,3–9, 5–22, 6–35, 7–8, 8–6,16, 9–7,10,13,27,31, 13–1,31,14–4,7,16–20,22,15–48,50,60

18. तत्रैव 2–3,4–2,5,4–32,7–27,9–3,10–40,11–54,18–41

19. तत्रैव 11–48

20. तत्रैव 2–41,64–3,14–13

21. तत्रैव 4–3

22. तत्रैव 10–19

23. तत्रैव 7–16,8–23,13–26,14–12,18–36

24. तत्रैव 17–12

25. तत्रैव 18–3

26. तत्रैव 18–3

27. तत्रैव 2–15,3–41

28. तत्रैव 2–48,49,4–41,7–7,9–9,12,18–29,72

29. तत्रैव 4–35,6–2,11–55,14–42,16–5

30. तत्रैव 10–20,11–7

31. तत्रैव 11–33

32. तत्रैव 3–2,14–6

33. तत्रैव 1–2,

34. तत्रैव 1–7,

35. तत्रैव 1–21,

36. तत्रैव 11–9,18–76,77

**डॉ. अरविन्दकुमारतिवारी**
संस्कृतप्रवक्ता
आदर्शवैदिकविद्यालयइण्टरकालेज,बागपत

***************************************************************************

# सांख्यदर्शनस्य वैशिष्ट्यम्

**डॉ. देवनारायण झा**

अथेदानीं सांख्यदर्शनस्य वैशिष्ट्यविषयमधिकृत्य कश्चन विचारः प्रस्तोतुमुपक्रम्यते। इह हि विरञ्चिप्रपञ्चिते संसारे समेषां प्रेक्षावतां जनानां दुःखनिवृत्तिपुरस्सरं निरतिशयसुखावाप्तौ सोत्साहं प्रवृत्तिर्दृश्यते। तत्र न केवलं मुमुक्षुरेव यतमानः संलक्ष्यते, अपिपामरोऽपि जनो निरतिशयसुखावाप्तिलक्षणस्य मोक्षस्य कृते यततेतरामिति। सा च मोक्षावाप्तिर्विधिमुखेन निषेधमुखेन वा आत्मज्ञानमन्तरा न भवितुमर्हतीति पक्षः सर्वसिद्धान्तवेद्यो विद्यते। अत एव दर्शनशास्त्रमर्मज्ञैः शास्त्रकृद्भिर्दर्शनाख्यो ग्रन्थो न्यबन्धि। न हि लौकिकेभ्यो वस्तुभ्यः कथमपि चिरस्थायि–सुखावाप्तिप्रत्याशा कर्त्तव्येति समीचीनः पन्थाः प्रतिभाति। सत्सु विविधेषु दर्शनेष्वात्मतत्त्वप्रतिष्ठापकेषु स्थितस्य गतिश्चिन्तनीयेतिसिद्धान्तमुररीकृत्य सांख्यदर्शनदिशा कश्चन सिद्धान्तः संसाध्यते। तत्रभवन्तस्तत्त्वविदो विद्वांसो जानन्त्येव यत्सांख्यदर्शनं निरीश्वरसांख्यदर्शनमित्युच्यते। तस्य प्रणेता कपिलो मुनिर्वर्तत इति दार्शनिकाः प्रमाणयन्ति, स्वीकुर्वन्ति च। एतन्मते पदार्थमात्रस्य संक्षेपतश्चत्वारो भेदाः सम्भवन्तीति तदीयः सर्वमान्यः सिद्धान्तः। तच्च प्रकृतिः, विकृतिः, प्रकृति–विकृतिः तदुभयरहितः पदार्थश्चेति। यद्यपि विश्वस्मिन् तत्त्वज्ञानप्रतिपादकानि सन्ति बहूनि दर्शनानि, यथा–न्याय–वैशेषिक–पूर्वमीमांसोत्तरमीमांसायोगाख्यानि प्रधानभूतानि षड्दर्शनानि–इति। तेषु प्रथितेषु षड्विधदर्शनेषु सर्वोत्कृष्टतमं सर्वशास्त्रनिष्यन्दभूतं सांख्यदर्शनमिदमादिमं स्थानं लभत इति बुधा आमनन्ति। तत्र सर्वे विचारदक्षाः प्राणिनः स्वकीयसामर्थ्यबलात्सूक्ष्मविचारदृष्ट्या वा जगतः सत्यत्वस्वरूपावबोधाय सर्वोत्कृष्टतां गतस्य सांख्यदर्शनस्य वैशिष्ट्यं स्वीकुर्वन्ति। श्रीमता भगवता श्रीकृष्णेनापि भागवताख्ये महापुराणे देवहूतिमधिकृत्य निसर्गदुर्बोधं ज्ञानप्रदं सांख्यतत्त्वं समुपदिष्टं तन्नाविदितं तत्त्वविदां शेमुषीजुषां जनानामिति। ततश्च प्रसिद्धेयं परम्पराऽऽधुनाप्यविच्छिन्नगत्या शिष्योपशिष्यैरनुगीयमाना प्रवर्धमाना च समवलोक्यते। इत्थञ्च सर्वदर्शनस्वतन्त्रे वाचस्पतिमिश्रः सांख्यतत्त्वकौमुद्यां प्रतिबोधयति यदस्य शास्त्रस्य प्रवर्त्तकः सूत्रप्रणेता वा सर्वप्रथमोऽत्रभवान् कपिलो महामुनिः सर्वज्ञान–विज्ञान–वैराग्यैश्वर्यादि–सम्पन्नो जगदिदं स्वजन्मना समलञ्चकार। तदनन्तरं यथाक्रमं शास्त्रमिदम् ईश्वरकृष्णेनाधिगतमिति।

तेन च विदुषा सप्ततिसंख्याककारिकोपेता सांख्यकारिका निर्मिता। सा च अधुनापि प्रमाणभूता विद्यते। वस्तुतस्तु भारतेऽध्यात्मविद्याया विकासः सांख्याशास्त्रद्वारैव सर्वत्र संजात इति– अद्वैतिनः शङ्कराचार्यादयोऽपि मन्वते। यथैव प्राचीनाः सांख्यशास्त्रस्य महत्त्वम् उररीकुर्वन्ति तथैव अर्वाचीना अपि तस्य दर्शनस्य महन्महत्त्वं संसाधयन्ति।

अतश्चास्य वैशिष्ट्यं सर्वत्र शास्त्रे विजृम्भते। इत्थञ्च यानि पञ्चविशतितत्त्वानि सांख्ये प्रतिपादितानि सन्ति तान्येव योगशास्त्रेऽपि परिगणितानि सन्ति। अत एव सांख्ययोगयोः समानतन्त्रत्वं प्रतिपादितवता भगवता श्रीकृष्णेन गीतायामुक्तम्

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।**

**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्।।** (गी. 5–4)

तत्रेदं प्रतिपादितं भवति यत् सांख्यमते प्रकृतिरेव जगत्कर्त्रीति। सैव मूलप्रकृतिरपि कथ्यते। मूलप्रकृतिश्च सत्त्वरजस्तमसां साम्यावस्था इत्युच्यते। सांख्यानां पदार्थविभागप्रकारस्तु ईदृशो विद्यते।

**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।**

**षोडशकस्तु विकारो न प्रकृति र्न विकृतिः पुरुषः।।** (सां.का.3)

सांख्यमते मूलप्रकृतिः स्वतन्त्राः वर्तते। वेदान्तदिशा प्रकृतेः स्वातन्त्र्यं नाभ्युपगतमस्ति। तन्मते मायैव प्रकृतिशब्दवाच्या विद्यते। वेदान्तमते जगन्निमित्तोपादानकारणत्वं ब्रह्मणः प्रतिपादितमस्ति। सांख्यदर्शने गुणत्रयात्मिकायां प्रकृतौ गुणवैषम्यान्महदादिक्रमेण सूक्ष्मस्थूलभौतिकादिजगतः संसृष्टिः सञ्जायत इति मतं स्वीकृतम् अस्ति। इत्थञ्च प्रकृतेश्चेतनत्वाज्जगदुत्पत्तिकारणसामर्थ्ययोग्यताविरहाच्च तन्मतखण्डनायैव भगवता व्यासेन ईक्षतेर्नाशब्दम् इति सूत्रयाञ्चक्रे। सूत्रार्थस्तु अशब्दं शब्दप्रमाणशून्यं स्वतन्त्रं=प्रधानं न जगत्कारणम्। जगत्कारणस्येक्षितृत्वश्रवणविरोधाद् इति। वस्तुतस्त्वत्र सांख्यदर्शने पञ्चविशतितत्त्वानि स्वीकर्त्तव्यानि भवन्तीतिधिया प्रत्यक्षानुमानशब्दात्मभूतानि त्रीणि प्रमाणानि स्वीकृतानि सन्ति। तद्यथा–

**दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्।**

**त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि।।** (सां.का. 4)

महादर्शभूतस्यास्य दर्शनशास्त्रस्य सिद्धान्तपक्षः सत्कार्यवादमादायैव प्रवर्तते। अत्र दर्शने

कारणावस्थायामपि कार्यं सूक्ष्मरूपेण तिष्ठति। यदुक्तम्–

**असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात्।**

**शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्॥** (सां.का.९)

अत्रायमाशयो यद् अत्र जगति यद् यत् क्रियमाणं भवति तद् तत् सदेव भवति। यदेवं न भवति तत् क्रियमाणमपि न भवति यथा शशशृङ्गादिकम्। किं बहुना इतोऽपि सत्कार्यवादः समाश्रियते यद् घटार्थी उपादानकारणमेव उपादत्ते न त्वन्यत्किञ्चित्। इतोऽपि कार्यं सद् भवति यत् कारणे सूक्ष्मरूपेण कार्यं तिष्ठति अत एव सर्वस्मात् सर्वस्योत्पत्तिर्न सञ्जायते। इतोऽपि कार्यं यद् विज्ञायते यत् कार्यात् पूर्वमपि कार्योत्पादिका शक्तिः कारणेषु तिष्ठति। इतोऽपि कार्यं सद् भवति यत् सर्वं खलु कार्यं कारणात्मकं भवति। नहि खलु बालुकाभ्यस्तैलोत्पत्तिर्दृश्यते। अमुमेवाभिप्रायं मनसि निधाय भगवता श्रीकृष्णेन गीतायां स्वकीयाभिप्राय ईदृश एव प्रकटीकृतः। यथा–

**नासतो विद्यते भावो नाभावो विद्यते सतः।**

**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥** (गी.2/16)

इत्थञ्च सत्कार्यवादसिद्धान्ताभ्युगमदिशैव सितकाभ्यस्तैलोपलब्धिर्न जायते प्रत्युत तिलेभ्यस्तैलं दुग्धेभ्यो दधि सञ्जायते परिणमते वा। अत्र च शास्त्रे परिणामवाद एव स्वीकृतो विद्यते। अत एव च सांख्यदर्शने प्रकृतौ परिणामरूपा क्रियाऽपि स्वीकृता विद्यते। सांख्यदर्शने द्विविधा क्रिया स्वीक्रियते – एका स्पन्दरूपा अपरा च परिणामरूपा। परिणामरूपा क्रिया मूलप्रकृतावेव तिष्ठति। न हि क्रियां विना जगतः समुत्पत्तिः। संभवेति विज्ञाय परिणामरूपा क्रिया मूलप्रकृतावकामेनैव स्वीकृता सांख्यतत्त्वविद्भिरिति। सा च प्रकृतिः कार्य–कारणरूपेण सत्त्वादिरूपगुणानां समुद्रेकवशात् परिणमते इति तत्त्वविदां सरणिः। किं बहुना इह संसारे कार्यमात्रस्य गुणत्रयात्कत्वेऽपि क्वचित् सत्त्वगुणस्याधिक्यं, क्वचिद् रजोगुणस्य, क्वचित् तमोगुणस्याधिक्यं समनुभूयते। अत एव जगदिदं त्रिगुणात्मकं सत्त्वगुणादिप्रधानं कथ्यते। अत एव देवीभागवतेऽपि तथ्यमिदं निरूपितं दृश्यते। तद्यथा–

**गुणत्रयकृतं सर्वं जगत्स्थावरजङ्गमम्।**

**विना गुणैर्न संसारो वर्तते किञ्चिदप्यसौ॥** (देवीभा. 6.31.48)

अत्र दर्शने प्रतिपादितः पुरुषः सर्वथा उदासीनो निर्गुणः किन्तु चेतनः द्रष्टा साक्षी चेति सांख्यसिद्धान्तसिद्धः। सांख्यमते आत्मनोऽनेकत्वं ज्ञानरूपत्वं व्यापकत्वञ्च प्रसिद्धमिति। एतन्मते सुख–दुःखादिकं बुद्धावेव आविर्भवति। अत्रेदमवधेयं भवति यत्सांख्यदर्शने कस्यापि पदार्थस्य नाशो जन्म च न भवति किन्तु आविर्भाव–तिरोभावावेव पुरुषश्च आध्यासिको भोक्ता वर्तते न तु वास्तविक इति। अत्र भगवता भर्तृहरिणाप्यवादि–

**एकस्य सर्वबीजस्य यस्य चेयमनेकधा।**

**भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः।।** (वा.प. 1/4)

अत एव उभयोः सम्बन्धः आध्यासिक एव स्वीकृतो विद्यते। एतन्मते सुखदुःखादीनि बुद्धिगतानि एव सन्ति किन्तु बुद्धौ प्रतिबिम्बवशादेव पुरुषोऽपि तानि समनुभवति। उक्तञ्च वाचस्पतिमिश्रचरणैः–

**एवं तत्त्वाभ्यासान्नास्मि न मे नाहमियपरिशेषम्।**

**अविपर्ययाद्विशुद्धः केवलमुत्पद्यते ज्ञानम्।।** (सां.तत्त्वकौ.2)

तद्यथा न्यायशास्त्रदिशा सुखदुःखादय आत्मनि तिष्ठन्ति। वेदान्तरीत्याऽन्तःकरणस्य मनसो धर्मत्वं सुखदुःखादीनां संसाधितं वर्तते तथैव सांख्यदर्शनदिशा सुखदुःखादयो धर्मा बुद्धावेव सन्तिष्ठन्ते। इयान् एवात्र विशेषः। पुरुषस्तु भेदाग्रहात् प्रकृतिगतं दुःखत्रयं स्वस्मिन् मन्यमानस्तदापकरणाय कैवल्यमभीप्सति। पुरुषपदवाच्यश्चात्र जीव एव स्वीक्रियते। जीवातिरिक्तो नास्ति कश्चन ईश्वरपदार्थः। अत एव दर्शनमिदं निरीश्वरसांख्यदर्शनमित्युच्यते। युक्त्या विचार्यमाणे मतमिदं विद्योतते यत्त्रिविधदुःखनिवृत्तिः कथं स्यादिति। सांख्यदर्शने आधिदैविकम् आधिभौतिकम् आध्यात्मिकञ्चेति त्रिविधं दुःखं प्रसिद्धमस्ति। अत्रेदं बोध्यं यत् पुरुषो द्रष्टा चेतनः किन्तु प्रकृतिश्चेतना जडीभूता विद्यत इति। प्रकृतौ क्रियाशक्तिर्विद्यते किन्तु दर्शनशक्तेरभावादुभयोः समागमादेव सर्गकृतं कार्यं पूर्णतामधिगच्छतीति सांख्या समनुन्वते। ततश्चेदं निर्णीतं भवति यद् यदवधि पुरुषस्य विमोक्षो न भवति तदवधि जरामरणजं दुःखमनुभवन्नेव पुरुषोऽवतिष्ठते। मोक्षश्च विवेकख्यातिवशादेव सञ्जायते। विवेकख्यातिश्च प्रकृतिपुरुषयोर्भेदज्ञानरूपा। सांख्यरीत्या व्यक्ताव्यक्तपुरुषादीनां विज्ञानं नाम यदैव जायते तदैव मोक्षावाप्तिः सञ्जायते। यदुक्तम्–

**एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।**

**अविपर्ययाद्विशुद्धः केवलमुत्पद्यते ज्ञानम्।।**

अत्र चैतद् विभावनीयं भवति यद् निसर्गरम्या कोमला सलज्जा प्रकृतिस्तथैव पुरुषं प्रति आत्मानं प्रदर्श्य निर्वृतिमुपैति यथा रंगभूमौ समागता काचन नर्तकी स्वकीयां नृत्यकलां प्रदर्श्य निर्वृतिमधिगच्छतीति। यथा–

**रंगस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।**

**पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः॥** (सा.का. 59)

एतन्मते जगतः असत्यत्वं नैव अभ्युपेयमस्ति जगदिदं यत्त्रिगुणात्मकं दृश्यते तस्य कारणमव्यक्तमेव बोध्यम्। नहि कुत्रचिद् वस्तुविद् वस्तुनि अभावजन्यत्वं स्वीकृतमस्ति किन्तु प्रत्यक्षादिगोचरत्वेन भावजन्यत्वमेव। कार्यस्य कारणात्मभूतत्वमेव स्वीकारात्। अत्रेदमनुसन्धेयं भवति यत्सांख्यमते द्विविधः परिणामो भवति। तत्र कदाचित् क्रियात्मकः परिणामो यथा महदादौ। उक्तञ्च साधर्म्यवैधर्म्यनिरूपणावसरे–

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।**

**सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्॥** (सां.का.10)

अत्रेदं नैव विस्मर्त्तव्यं यत् प्रकृतौ प्रधानीभूतायाम् अर्थात् मूलप्रकृतौ स्पन्दात्मिका क्रिया नैव तिष्ठतीति। यतो हि मूलप्रकृतिर्व्यापिका सिद्धा सांख्यमतेऽवगम्यते। किं बहुना इदानीन्तने प्राचीनकाले वा एतादृशं स्थानं तत्त्वं वा नासीद् न वा विद्यते यत्र सूक्ष्मरूपेण प्रकृतेरस्तित्वं न स्यादिति। अत एव च सांख्याचार्यमते साकल्येन उक्तं संगच्छते यद् जगदिदं त्रिगुणात्मकं वर्तत इति। एतादृशं स्थानं नास्ति यत्र गुणत्रयस्य एकत्र सम्मेलनं न स्यात्। अत एव त्रिषु गुणेषु सत्स्वपि कुत्रचित् सत्त्वगुणस्याधिक्यं क्वचित् रजोगुणस्य, कुत्रचिच्च तमोगुणस्य। उक्तञ्च ईश्वरकृष्णेन–

**जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।**

**पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव॥** (सां.का.18)

अत्रायमभिप्रायो यत् सांख्यमते न्यायदर्शनवद् आत्मा पुरुषविशेषोऽनेकविधः स्वीकृतो विद्यते। अतएव लोके दृश्यते यत्कश्चित् पुरुषः सत्त्वगुणप्रकृतिकः संसारस्योपकारमेव वाञ्छति कदाचिदपि परेषामनुपकारं कर्तुं नैव समुत्सहते अयमेव पुरुषः साधुपदवाच्यो भवति। कश्चित्पुरुषः क्रोधाग्निना सर्वदैव परेषां दुःखं दित्सुः आस्ते। कश्चित् पुरुषस्तमोगुणप्रकृतिको

भवति। अत्र हि सांख्यमतेनैव भगवता श्रीकृष्णेन गीताया त्रिविधः पुरुषो निरूपितः। तद्यथा–

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।**

**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते।।**

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।**

**यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः।।**

एवञ्च क्षरः पुरुषः भूतपदवाच्यः। अक्षरो जीवपदवाच्यः। ईश्वरः परमात्मपदवाच्यो भवति। आत्मनि परत्वम् अकारणकरुणाकारित्वमेव। ईश्वरो वा साधुर्वा परेषां साधुवादेन कल्याणमेव वाञ्छति। यद्यपि सांख्यदर्शनं निरीश्वरवादत्वेन प्रतिपादितमस्ति तथापि तन्मते प्रकृत्या सह पुरुषविशेषस्य संयोगवशादेव सृष्टिर्भवति–इति तु यत्र तत्र सर्वत्र व्याख्यानेनावगतं भवर्ति। परञ्च विचार्यताम्–सांख्ययोगौ न तावत् पृथग् वर्तेते। एवं हि पृथगिति कथनेन इदमेव ज्ञातं भवति यद् यथा पातञ्जलयोगदर्शने ईश्वरस्य अस्तित्वं स्वीकृतमस्ति न तथा तस्य अस्तित्वं सांख्यमते स्पष्टतया विद्यत इति। यथा न्यायदर्शनं वैशेषिकदर्शनञ्च पार्थक्येनापि समानतन्त्रत्वेन स्वीकृतमस्ति तत् कस्य हेतोः। तत्र इदमेव तथ्यं प्रतिभाति यत् यत्तत्त्वं प्रमेयरूपं न्यायदर्शनं स्वीकरोति तदेव तत्त्वं वैशेषिकदर्शनमपि, किन्तु इयानेव द्वयोर्विशेषः परिलक्ष्यते यत्सांख्यदर्शनम् ईश्वरस्यास्तित्वविषये भवतु नाम उदासीनं किन्तु तत्कथनस्याभिप्रायो वर्तते यद् यथावेदान्तदर्शने माया अविद्या वा चेतनाधिष्ठिता चैतन्यवशादेव जगदिदं सृजति न तथा सांख्यमते। सांख्यमते प्रधानीभूता प्रकृतिः स्वतन्त्रा न तावच्चेतनाधिष्ठिता। इदमेव कारणं वर्तते यत्प्रकृतौ प्रधानत्वं सांख्याचार्यैः स्वीकृतम्। तत्र सांख्यमते या प्रकृतिः सैव वेदान्मतेऽविद्या माया वा। केषाञ्चिद् आचार्याणां मते अविद्या माया च पृथक्–पृथक् वर्तते किन्तु केचन आचार्यास्तयोरभेद इति स्वीकुर्वन्ति। अत एव भामतीकारेण वाचस्पतिमिश्रेण अविद्यापदेन एकः मायाविशेषः स्वीकृत अपरश्च संस्कारविशेषः। किन्तु सांख्यमते एकविधैव प्रकृतिः। इदं च न विस्मर्त्तव्यं यत् प्रारम्भे एव ईश्वरकृष्णेन–

**अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां नमामः।**

**अजा ये तां जुषमाणां भजन्ते जहत्येनां भुक्तभोगां नुमस्तान्।।** (सा.तत्त्व कौ.)

इत्युक्तं सङ्गच्छते। अत एव संक्षेपतः सांख्यमते त्रिविध एव पदार्थः। कश्चित् प्रकृतिरूपः कश्चित् विकृतरूपः। कश्चिच्चानुभयरूपः। प्रकृतित्वञ्च तत्त्वान्तरोपादानकत्वम्।

अत एव गोघटादीनां तत्त्वपरिगणने न तावत् सांख्याचार्यैः परिगणनं कृतम्। एतत् कारणवशादेव इदं दर्शनं सांख्यं संख्याप्रधानमिति कथ्यते। वेदान्तमते पुरुषो न तावदुदासीनः। एतन्मते पुरुषः उदासीनो भवति। अत्र नये बिम्बप्रतिबिम्बभावः स्वीकृतो विद्यते। सांख्यमते यज्ज्ञानं तच्च न बुद्धिस्तन्न ज्ञानमिति। अन्यमते ज्ञानं पृथग् बुद्धिरपि पृथग् भवति। एतन्मतखण्डनायैव न्यायदर्शने गौतमीयं सूत्रं सर्वव्यवहारहेतुर्बुद्धिर्ज्ञानम् इति समानाधिकरण्येन उक्तं वचनं संगच्छते। किन्तु एतन्मते बुद्धावेव ज्ञानं भवति ज्ञानं चात्र वृत्तिरूपम्। अन्येषां दार्शनिकानां मते बुद्धिर्गुणरूपम्। सांख्यमते बुद्धावेव सुखदुःखादिकं सर्वम् आविर्भवति। तच्च बुद्धौ प्रतिबिम्बवशादेव पुरुषोऽनुभवति। तत्र पुरुषविशेषः प्रतिबिम्बते। एतस्मात् कारणात् प्रतिबिम्बभावस्तु न तावद् वास्तविकः अपितु अवास्तविक एव। अत एव पुरुषस्तु पुष्करपलाश-वन्निर्लेप इत्युक्तं सङ्गच्छते। एतन्मते विवेकस्य मोक्षप्राप्तिमार्गे साधनत्वेन प्राधान्यं स्वीकृतमस्ति। विवेकश्चात्र प्रकृतिपुरुषयोर्भेदः। एतच्च सर्वं प्रारम्भे एव ईश्वरकृष्णेन साभिप्रायं प्रतिपादितम् – यथा–

**दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः।**

**तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानाद्॥** (सां.का.2)

अत्र कारिकायाम् इदमेव ईश्वरकृष्णेन निगदितं यद् व्यक्तं = महदादिकम्, अव्यक्त = प्रधानं ज्ञश्च = पुरुषः। एतत् पदार्थत्रयस्य भेदपरिज्ञानादेव मोक्षो भवतीति सांख्यमतानुसारिव्याख्यानम्। इति दिक्।

**डॉ. देवनारायण झा**
प्राचार्यः, साहित्यविभागे
का.मि.द.सं. विश्वविद्यालयस्य।

# उपमानप्रमाणम्

किशोरनाथ झा

यथार्थतः ज्ञातस्य पदार्थस्य सादृश्यात् सर्वथा अज्ञातस्य अदृष्टस्य च पदार्थस्य साधनम् उपमानं भवतीति नैयायिकस्य सिद्धान्तः। महर्षिः गोतमोऽभिलपति–प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्। 1/1/6। प्रसिद्धस्य यथार्थतया ज्ञातस्य साधर्म्यात् समानो धर्मः सधर्मस्तस्य भावः साधर्म्यम् तस्मात् अर्थात् सादृश्यात् साध्यस्य सर्वथा अज्ञातविषयस्य साधनमुपमानं भवतीति सूत्रतात्पर्यम्। यथार्थस्य पूर्वतो ज्ञातस्य गोः सादृश्यात् पूर्वतः अज्ञातस्य गवयस्य साधनं भवत्युपमानप्रमाणेन। इयमत्र प्रक्रिया नागरिकेण जिज्ञासिते गवये आरण्यकस्तमवबोधयति गोसदृशो गवयो भवति। पश्चात् गतारण्यो नागरिकः गवयं वीक्ष्य तत्र गोः सादृश्यं पश्यन्नारण्यकवाक्यमसौ स्मरति पश्चात् गवये गवयशब्दवाच्यतामसौ निश्चिनोति। अत्र संज्ञा–संज्ञिसम्बधस्य निर्णयः अस्योपमानस्य फलं प्रमाणान्तरेण न संभवति। अत्रोपमितिज्ञानस्वरूपं तु अयमेव पशुः गवयपदवाच्यो विद्यत इति नैयायिकाः। अतएंव न्यायभाष्यकृदाह–'अस्य (पशोः) गवयशब्दः संज्ञा' इति संज्ञा–संज्ञिसम्बन्धं प्रतिपद्यते। अस्यानुमोदनं सन्दृश्यते न्यायवार्त्तिके समाख्या संबन्धप्रतिपत्तिरुपमानार्थ इति हि तत्पंक्तिः।

अत्र पूर्वपक्षः कस्यचन दार्शनिकस्य यत् प्रत्यक्षशब्दज्ञानातिरिक्तं तृतीयं ज्ञानं नात्र भासते; अत उपमितिज्ञानं तत्करणमुपमानं वा प्रमाणं न स्वीकरणीयम्। तथाहि गोः सदृशो गवयो भवतीति शाब्दज्ञानम्; यतो हि विश्वस्तव्यक्तिमुखात्श्रुताच्छब्दादुत्पन्नम्। पुनश्च दृश्यमानोऽयं पशुः गोसदृशः इति प्रत्यक्षज्ञानमेव पुनश्च गोसदृशोऽयं गवय इति चक्षुषैव दृश्यते। एतज्ज्ञानद्वयातिरिक्तं किमपि ज्ञानं नास्त्येवेहेति उपमितिः किमप्यपूर्वं ज्ञानं नास्ति।

अत्र न्यायवार्त्तिककारोऽभिदधाति–"साधूपपादितं भवता किन्तु उक्तज्ञान-द्वयानन्तरं तृतीयं ज्ञानं भवति अस्यैव पशोः गवय इति संज्ञा। नैतज्ज्ञानं संज्ञायाः प्रत्यक्षं शाब्दंवा। अस्यैव ज्ञानस्योपपत्तये प्रमाणमुपमानं नैयायिकाः स्वीकुर्वन्ति। तस्मात् उदयनाचार्यः न्यायकुसुमाञ्जलौ निगदति–

